॥ श्रीशः शरणम् ॥



# मधुरवाणी.

सुधानिष्यन्दिन्या मधुरमधुरालापकलया
खलावज्ञामूर्च्छाभरमपहरन्ती सुरगिरः ।
मनोज्ञालङ्कारा रसिकजनचेतांसि सहसा
वशीकुर्वाणेयं भुवि मधुरवाणी विजयते ॥

१० वर्षे ] १८६६ शाक आश्वीनस्य [ १२ सञ्चिका

राधाधरमधुस्यन्दमिलिन्दाय मधुद्विषे ।
कृष्णापटकुविन्दाय गोविन्दाय नमोऽस्तु नः ॥

## महाकवेः कालिदासस्य विषये सुप्रसिध्दा किंवदन्ती.

ले. संस्कृतचंद्रिकासंपादकः सुगृहीतनामा कीर्तिशेषो विद्यावाचस्पति-
रप्पाशास्त्री राशिवडेकरः

अस्य कविकुलचूडामणेर्विषये सुप्रथितेयं किंवदन्ती हृदयङ्गमेति प्रियवाचकमहाशयेभ्यः समुपाह्रियते । तथाहि आसीत् किल पुरा कोऽपि निखिल-

नरेन्द्रमौलिमालालालनीयचरणारविन्दः श्रीमान्महीपालः । अस्य च मानुष्यमुपगतेव लक्ष्मीः क्षितितलमवतीर्णेव कुसुमायुधाङ्गना, प्रमुज्झितचापला मर्त्यभावमनुप्राप्तेव तडिल्लता, महामुनिशापवशाद्दिवः परिभ्रष्टेव भगवती गिरां देवी, कुलभवनं कलानां, निवासमन्दिरमलौकिकस्य सौन्दर्यस्याकरः सौकुमार्यस्य, संस्थानधरणिः सौशील्यस्य, विहारभूमिर्विलासानाम् , उत्पत्तिस्थानं विशुद्धगुणरत्नानामाधारयष्टिः कवितालतिकानां समभूत् कापि प्रद्योतमानविनया तनया ।

अथेयमतिक्रान्तप्रायबालभावा वात्सल्यातिशयशालिना पितृदेवेन च तत्तासु विद्यासु कलासु च प्रावीण्यमारोपिता विवाहोचितां दशामापेदे । आसीच्चास्य महीपतेः प्रधानामात्यः कोऽपि महाभागः । तस्य च मूर्त इव पञ्चायुधो बभूव कुमारः कश्चित् । नूनमयमुचितो वरो राजकन्याया इति मन्वानोऽमात्यस्तेन समं तस्याः परिणयं घटयितुं यत्नमातिष्ठत् । निपुणतमा तु नृपतिकुमारिका गुणवन्तमेव दयितं कामयमाना रूपवन्तमपि प्रधानामात्यकुमारं प्रत्याख्यातवती । एवमन्येऽपि भूयांसो राजन्यतनया अपण्डिता इत्यनया निराक्रियन्त । एवं प्रत्याख्यायमानेषु कुमारेषु समतिक्रान्ते च कन्यकाया बाल्ये परां चिन्तामापन्नो महीपतिरपेद्युः प्रभाते यो वरो नयनगोचरतामुपगच्छेत् तस्मै किल देया कन्यका इति प्रतिजज्ञे । आदिदेश च कन्यकां ' वत्से नूनमनुमन्यतां त्वयेदं मे वचन ' मिति । कन्यकाऽपि पितुराग्रहातिरेकं समवबुध्द्य तदीयं प्रणयमतिक्रमितुमप्रभवन्ती कथंकथमपि तदेतदन्वमोदिष्ट । अथ महीपतेरिमां प्रतिज्ञामवबुध्द्य कुटिलमतिरमात्यो नूनमयमेवावसरः पाण्डित्यगर्विताया राजकुमारिकाया अवलेपोच्छेदस्येति विचिन्त्य परेद्यवि नितान्तमनुचितं कमपि पुमांसं उपस्थापयितुकामः तथाविधपुरुषान्वेषणाय तदात्वे एव प्रतिष्ठत । प्रास्थितश्च क्वापि कान्तारान्तरे तरोः शाखाग्रमारुह्य कुठारिकया शाखामूलं छिन्दन्तं कमपि कुमारमवलोक्य नूनमबुद्धिरयमुचितो राजकुमारिकाया दर्पापनोदायेति व्यचिन्तयत् । कुमारोऽयं यद्यपि निर्बुद्धस्तथाप्याकृत्या अतिमात्रं नयनविलोभनीय आसीत् । एवं चेद् भूपालोचितेन वेषेण अलंकारैश्च अलङ्क्रियेत, न किलास्य राजकुमारभावं प्रति संशयीत मनो निपुणमस्यापीति व्यचारि तदात्वे एव अमात्येन ।

अथासौ अवतीर्य तुरङ्गमात् कस्यचन महीरुहस्य मूले तुरङ्गममवस्थाप्य विकीर्य च तस्य पुरस्तात् कोमलकोमलतृणानि यत्र स गोपालकुमारक आसीत् तस्य तरोर्मूलमुपागच्छत्। सुस्निग्धया च दृष्ट्या प्रेमरसेन च अभिषिञ्चन् इव कुमारमवलोक्य प्राह-"वत्स ! कस्य कुलमलंक्रियते भवता ? किमर्थं चास्य अतिकठिणस्य द्रुमस्य शाखायाः छेदनेन आत्मानमायासयसि ? नूनमियं शिरीषकुसुमसुकुमारा कान्तिमती हृदयङ्गमा आकृतिः ते महाकुलीनतां प्रत्याययति। उद्यमः पुनरयं बोधयति विलासं त्वदीयानां दुर्भागधेयानाम् । अहो कुटिलप्रायता दैवस्य यदेतदशेषसुखासेवनैकयोग्यमपीदं वपुरतिहीनतमैरेवंविधैः कर्मभिः क्लेशयति । कुमार! अवतर अस्मात् तरोः । कृतमनेन आयासेन । पूरयिष्यामि ते मनोरथम् । एहि अलंकुरु मदुपान्तिकम् इति ।" स तु कुमारः प्रथममस्य समुज्ज्वलतमेन वेषेण भीतभीत इव तरुविटपान्तरे लीयमानः अपि प्रेमपरिप्लुतानि विस्रम्भजनकानि च एतादृशानि वचांसि समाकर्ण्य व्यपेतभीतिः निसर्गचापलवशात् शाखाग्रात् अवप्लुत्य आरण्यकतया अकृतप्रणामः अविनीत इव अमात्यस्य पुरस्ताद् अवतस्थे । विदितप्रायमेव इदम् अखिलानां यत् प्रभवन्तः अपि पुरुषाः कार्याणि सम्पादयितुं ईहमानाः आत्मनः आदरं अनादरं वा न गणयन्ति । समामनन्ति हि नीतिविदः ।

अपमानं पुरस्कृत्य मानं कृत्वा तु पृष्ठतः ।
स्वकार्यं साधयेत् प्राज्ञः स्वार्थभ्रंशो हि मूर्खता ॥ इति ।

अत एव च अस्य गोपालकुमारस्य अविनीतिप्रायः अपि आचारः अयं आमात्यप्रवरस्यास्य चेतसि न स्वल्पमपि विषादं जनयामास । प्रत्युत अभीष्टस्य परिसिद्धप्रायत्वात् सविशेषमेव प्रमोदमुत्पादयामास । अथ अमात्यो मन्दं विहस्य कुमारस्य पृष्ठे कराग्रम् आवर्त्य प्रेमप्रफुल्लाभ्याम् इव वीक्षणाभ्याम् अवलोक्य तेन सह तुरङ्गमसमीपं उपागत्य हयपृष्ठवर्तिनम् पर्याणम् कौशेयवसनविराजितं हंसतूलगर्भम् आसनविशेषम् आहृत्य प्रच्छायशीतले क्वापि प्रदेशे समास्तीर्य च सह तेन कुमारेण निषसाद । अपृच्छच्च पुनरपि तदीयं वृत्तम् ।

सः अपि ग्राम्यप्रायैरक्षरैः कथंचिद् असम्बन्धभूयिष्ठम् आत्मनः वृत्तमाचष्ट । ततो न किलायं हीन कुलसंभूत इति समवधारयांबभूव अमात्यः ।

अथ उत्थाय नातिदूरवर्तिनि मनोहरसलिलभास्वरे सरसि निर्वर्तितस्नानादि विधिः अमात्यः विहितमज्जनक्रियस्य तस्य कुमारस्य नातिदूरमुपविष्टः करण्डकाद् नानाविधाम् अभ्यवहार्यम् उध्दृत्य वितीर्य च कुमाराय स्वयमपि अभ्यवजहार । अनुष्ठिताहारौ च एतौ पुनरासनमध्यासाताम् । अथ अमात्यः 'कुमार! अपि निर्वृत्तस्तव उद्वाहः? इत्यप्राक्षीत् । सः अपि 'न' इति प्रतिप्राह । पुनः अमात्यः वक्तुमारेभे । वत्स! अतिक्रान्तं ते बाल्यम् । कृतं किल इदानीं तव अस्मिन्वपुषि हृदयङ्गमेन यौवनेन पदम् । नूनं यौवनमेव सार आयुष्यस्य । अत्रैव हि समासेव्यानि तत्तानि सौख्यानि मनुजेन । यत्सत्यं प्रौढप्रायं यौवनं च निपुणतमा कुलीना यौवनावलीढसकलावयवा सहधर्मिणी चेति कोप्यपर एवायं ब्रह्मानन्दसहोदर आनन्दः । ते किल वंचिता दैवेन, ये परिस्फुरति यौवने न इच्छन्ति परिणेतुम् । दुस्साधं च नीरसप्रायं च एकान्तिकं ब्रह्मचर्यं नाम । किंच कुमार! यावन्न साकल्येन अतिक्रान्तं बाल्यं, तावदेव केषांचिद् ब्रह्मचर्यवार्ता कुशलमासादयति, अथ च यावन्नैषु नाम्यते धनुः पञ्चशरेण । यौवनारम्भेऽपि केचिद् अशिथिलमेव अभिनिवेशमात्मनः प्रकाशयन्तः अलौकिकत्वमिव प्रकटीकर्तुकामा नैव परिणेतुमिच्छन्ति । अथ शनैः शनैरुपचीयमाने यौवने कुसुमशरशरजर्जरितांतःकरणानामेषां मनसि परिणयाभिलाषः प्रादुर्भवति । किन्तु अतिक्रांतप्रायत्वाद् विवाहोचितस्य वयसा नैतेभ्यः के अपि कन्यकां प्रदातुमभिलष्यन्ति । अन्ततश्च उभयतः भ्रष्टा एते पञ्चशरेण निगूढमेव साधुजनविगर्हिते पथि पदं कार्यन्ते । क्रियन्ते च भाजनानि तत्तादृशानामनुचितानां व्यसनानां यैः किल अभिभूता अमी वियुज्यन्ते प्राणैः । जीवन्तो वा निधनतोपि विषमतमां दशामाप्नुवते । तद् युज्यते अनतिक्रान्तप्रायबालभावेन इदानीमेव भवता परिणेतुम् । इति निशम्य च एतद्वचनं सपदि विकसितांतःकरणः कुमारः सांसशिरःकम्पं उच्चैर्विजहास । प्राह च । 'अरे भद्रपुरुष! सत्यमेतदद यद् भवता प्रोक्तम् । किन्तु निर्धनतमस्य मे कथं वा विवाहो भवतु' इति । पुनरमात्योऽ भाषिष्ट । वत्स! अलमनया चिन्तया । नूनं वशीकृतमनेन ते सौजन्यानुगतेन सौन्दर्येण मे चेतः । अस्य तवाकारस्य महा-

कुलेष्वेव उचितः सम्बन्धः। तदिच्छामि त्वां राज्ञो जामातरं प्रविधातुम्' इति। निसर्गप्रगल्भाकृतेस्तस्यामात्यस्य तथाविधेन वचसा समारूढविस्रम्भः स कुमारः पुनरुच्चैर्विहस्य आत्मनः प्रमोदातिशयं प्रकटयामास। अथ चरमगिरिशिखरावलम्बिनि भगवति सहस्रकरे सह तेन कुमारेण तुरङ्गममारूढः अमात्यः स्वीयं सदनं प्रत्यावर्तत।

सदनमुपागतश्च निशीथिन्यां कारितनृपोचिताहारं तं कुमारं महार्हे शयने शाययामास। शयानं चामुं राजकुमारम् उपदिश्य आगामिनि दिवसे अत्र अप्रमत्तेन भवता व्यवहर्तव्यमित्युपदिश्य स्वयमपि शयनं भेजे। अथ मुहूर्तद्वयावशिष्टायां रजन्यां प्रबुद्धः अमात्यः प्रबोध्य अमुं कुमारकं निर्वर्तितप्राभातिकविधिं सेवकैः सुरभितैलैरभ्यज्य स्नापयामास। विहितस्नानं च महार्घैर्वसनैश्च भूपालमात्रोचितैरलंकारैरलंकृत्य च अभिनवैर्भृत्यैः सह महीपतेर्द्वारमुपस्थापयामास। अथ तेषु किंकरेषु अमात्यसहवासप्रगल्भश्चतुरमतिः कोऽपि राजानमुपसृत्य वरागमनं निवेदयामास। राजापि सोत्साहं सप्रमोदं प्रत्युद्गम्य सह सचिवादिभिरवेक्ष्य कन्दर्पकमनीयं जामातरं वेषालंकरणादिभिरनुमाय च तस्य समृद्धां विभवशालितां महाकुलसंभूततां च तं सम्यक् सत्कृत्य स्वकुलोचितेन विधिना अशेषभुवनसौन्दर्यसारविनिर्मितायाा इव निखिलब्रह्माण्डसद्गुणजालघटितायाा इव चात्मनस्तनयायाः पाणिं यथाप्रतिज्ञं तेनैव ग्राहयामास। अहो बलीयस्त्वं भवितव्यस्य।

अथ व्यतीतेषु कतिपयेषु दिवसेषु निर्वृत्तप्रथमर्तुमहोत्सवा नृपालतनया मूर्तिमतीव विलाससन्ततिः तनुमतीव शृंगाररसाधिदेवता विविधविहारोपकरणसनाथं समुज्ज्वलानेकगुणरत्नप्रांतैः सोमादिभिरिव उपहारीकृतं दिव्यपुरीखण्डं वासभवनं प्रथमप्रविष्टेन रमणेन समुल्लसितं प्रविवेश। अवालोकिष्ट च हंसतूलशयने अव्यवस्थपर्यस्तावयवं गाढप्रसुप्तमात्मनो भर्तारम्। अथ सुचतुरनारीजनोचितेनाचारेण एनं प्रबोध्य स्वापभंगव्याकुपितं प्रणयगर्भैर्वचनीयैः कथंचिद् अनुनीय समुन्नीय च अस्य विलासानाभिज्ञतया ग्राम्यत्वं, कुलीनतां प्रत्यपि संन्दिहाना गर्भगृहकुड्येषु आलिखितानि चित्राणि अस्मै प्रदर्शयितुमारेभे। नानाविधेषु रसिकजनहृदयहठग्राहिकानिपुणेषु तेषु नास्य मनो रेमे। अथ अन्ततः

नियुध्यमानयोः ससंरंभं कयोश्चन वृषभयोः प्रतिकृतिमालोकयतः तदेकना-नमिवाभूदन्तःकरणमेतस्य । तदवलोकयन्ती तु राजकन्यका नूनमयं गोपाल-दारक इत्यवधार्य आत्मनो भागधेयानि निन्दन्ती मुषितमिव आत्मानं मन्वाना तत्तादृशेन पाण्डित्येन अस्मदशभर्तृसमागमजन्यं अनुतापातिशयमारोपिता दुःखासिकागृहीतहृदया च दिनकरकरस्पृष्टा कुमुदिनीव तदात्वे एव नितान्त-मम्लायत् । नाज्ञासीच्च किमहं करोमीति । अथ कोपवशीभूतायास्तस्याः पिशा-चोपहताया इव वदनतो निरसरन् अक्षराण्येतानि । ' मूढ ! किंवा निर्विघस्य पशोरिव तवानेनात्मलाभेन । भवादृशानां किल जीवितापेक्षया निधनमेवानु-मन्यन्ते साधवः । तदपसर मन्दात्मन् ! अनधिगत्य भगवत्या वाग्देव्याः प्रसादं नैतद्वासगृहमधिष्ठातुमर्हसि । अहो धिक् ते जीवितं प्रस्तरनिर्विशेषस्य ' इति । ग्राम्योऽपि स गोपालः परुषप्रायैरेतैरक्षरैरन्तरे समर्पितक्रकच इव सुदुस्सहं व्यसनमापन्नो निर्विण्णतमश्च ' भद्र ! किमेवं निर्वीर्य इव सहधर्मिणीकृतं सहसे उपालंभम् । समालंब्य उपायं वशीकुरु गिरादेवी' मिति समुपदिश्य प्रेर्यमाण इव उत्साहेन ससंभ्रममुत्थाय 'भद्रे ! न किलातः परमविद्यायास्य ते भर्तुर्वदनं द्रक्ष्य-सी ' ति प्रत्यभिधाय भार्यां निर्जगाम । निर्गते तु भर्तरि व्यतिक्रान्तेषु द्वित्रेषु च मुहूर्तेषु शनैःशनैर्मन्दीभूतकोपावेशा प्रकृतिमापन्ना च नृपालकन्यका नोचितो निर्गुणस्यापि भर्तुरनादरः कुलयुवतीनामिति चिन्तयन्ती पुनरपि कमपि विषादमापेदे ।

अथ व्यतीतेषु कतिपयेषु मासेषु कदाचिद् धवलीकुर्वति ब्रह्माण्डोदरं भगवति सुधाकरे, समुचितविरहवेदना पिधाय कपाटं सन्नियम्य च शृंखलया शून्यप्राये वासभवने विरहावस्थामनुकुर्वाण इव मन्दमन्दमेव प्रकाशमाने प्रदीपे, वामपार्श्वेन शयनतलमधिशयाना करतलोपाहितवदना क्षणमनुबद्धधोरणाश्रुसन्तानेन शयन-तलमार्द्रीकुर्वाणा क्षणं नासाग्रनिहितनिश्चलेक्षणद्वंद्वा क्षणं सरयप्रवृत्तकोष्ण-निश्श्वासग्लपिताधरपल्लवा क्षणं च किमपि ध्यायन्तीव कल्पकोटिकल्पामिव दीर्घतमां रजनीं मन्वाना कथंकथमपि तस्थौ । अथ एवंविधायाश्चास्या 'अयि जीवितवल्लभे ! विलासिनि ! देहि अपावृतकपाटं द्वारम्' इति हृदयरसायनानीव अक्षराणि श्रवणसरणिमन्वसरन् । एतानि च आकर्णयन्ती एषा सपदि स्वप्नो-त्थिता इव प्रविलीनाशेषपूर्ववृत्तिः कुत एतद् अमृतसारसरसं वचनं, कथं च

एतदाकर्णयन्त्याः समुच्छ्वासितोऽन्तःकरणं, किमिति च त्वरयति भाषमाणायास्मै प्रवेशं दातुम् । नूनं स एवायं मे जीवितेश्वरो मत्प्रयुक्तया अवमाननया प्रकुपितः सम्पाद्य वैदुष्यं प्रतिनिवृत्तो मामाह्वयति । तदीय एवायं स्वरसंयोगः । मूर्च्छया परिमुच्यमानमिव प्रमोदपल्लवितमिव च कथयतीवेदमन्तः करणं स एवायमिति । न किल परपुरुषभाषितानि पतिदेवताया हृदयमानन्दयितुं प्रभवन्ति । कुतः पुनर्दुर्दैवोपहताया मम एवंविधानि येन पाण्डित्यस्य परां काष्ठामारूढं विहार-भुवनमिव वैदग्ध्यस्य संकेतस्थानमिव विलासानाम् तमेव पाणिग्रहीतारमनु-प्राप्स्यामि । अथवा अवितर्किता अपि संघटन्ते एवंविधा अर्थाः । दुर्निवारा हि अवश्यंभाविनो भावाः । अघटितघटनापटीयसी हि स्मर्यते भवितव्यता विबुधैः । अतः स्यात्कदाचित् स एवायं मे जीवितवल्लभः । तदपावृणोमि तावत् कपाटम् । अथवा न अपरीक्ष्य एवमनुष्ठातुं युक्तम् । आजीवितं हि प्रदहन्ति हृदयमलातशल्यकल्पानि अविमृश्य कृतानि कर्माणि । तत् परीक्षय तावत् कोऽयमिति इति चिन्तयामास । चिन्तयन्त्याश्चास्याः पुनः श्रवणपथ-मुपाजगाम 'कान्ते' दीयतां अपावृतकपाटं द्वारा' मिति वचनम् । निशम्य च एतत् पुनः इयं प्रतिप्राह ' अस्ति कश्चिद्वाग्विशेष ' इति । सोपि तद्वाक्यघटितानि त्रीण्यपि पदानि निशम्य तत्पदघटितारंभं क्रमशः काव्यत्रयं प्रणिनाय । 'अस्त्यु-त्तरस्यां दिशि देवतात्मा' इति 'कश्चित्कान्ताविरहगुरुणे' ति 'वागर्थाविव संपृक्ता-वि' तिच कुमारसंभवमेघदूतरघुवंशसमाह्वयम् । तदाकर्ण्य प्रीतिप्रफुल्ला राज-कन्यका सलज्जमुत्थाय अपावृत्य कपाटं दृष्टमात्रस्य पादयोः प्रणिपत्य ' नाथ क्षम्यतामाचरितपूर्वः अविनयः अस्य दासीजनस्य, इति साश्रुगद्गदं प्रार्थयामास । सोपि 'भद्रे ! जीवितमसि मदीयम् । को हि नाम त्वदीयोऽपराधः' । इति समा-लपन् सप्रणयमुत्थाप्यैनां गाढं च परिष्वज्य लज्जाप्रमोदविस्मयातिशयादिभिः व्याकुलीक्रियमाणां विलासगर्भैर्वचनैः समाश्वास्य तत्समयोचितं प्रमोदातिशय-मन्वभवत् । अनुयुक्तश्च अनया आत्मनः विन्ध्यवनमध्यप्रवेशं, तत्र प्राणपरि-त्यागोपन्यासपूर्वकं सुदुस्तरेण तपसा भगवत्याः काल्याः समाराधनं, प्रसन्नया चानया वाग्वैभवसमर्पणं, कृतार्थस्य चात्मनः प्रत्यावृत्तिं सविस्तरं निवेदयामास । अथ राजकुले बहुलीभूते अस्मिन् वृत्तान्ते सर्वेपि प्रमोदस्य परां काष्ठां अधि-जग्मुः । अमात्यस्य तु विपरीतभागधेयस्य विफलमनोरथतया वदने कृष्णिमा

प्रादुरभूत् । राजापि काल्याः प्रसादादेव वाग्वैभवशालितां जामातुरवधार्य श्रीकालिदास इत्येव तदीयं नाम चकार । सुचिरं च तत्सहवाससुखमन्वभवद् इति ।

संस्कृतचन्द्रिकातः

---

# आधुनिककव्युक्तिः

ले. लं. सिरोले अनंतशर्मा कविभूषणम् उदगीर

किं कालिदास ! वहसे त्वमखर्वगर्वं नान्यः कविर्जगति कोपि समो मयेति ॥
वृध्धोऽसि बुध्धिविधुरोऽसि तथापि नेत्रे विस्फार्य पश्य तव दर्प्पहरं
कविं माम् ॥ १ ॥

काव्यं प्रयत्नशतनिर्मितमप्यहो मे नैवाभिनंदति गणो यदि पंडितानाम् ।
मन्ये तदा मनसि कोपि मदीयवाचां गंभीरमर्थमभिधातुमिहासमर्थः ॥ २ ॥

श्रीमल्लिनाथकविना विरचय्य टीकां काव्येषु ते कृतमतीव यशः प्रवृत्धम्
व्याख्याति कोपि न कविः कविता मदीयास्तस्माद्यशो न च दिगंतगतिं
प्रयाति ॥ ३ ॥

भोजो हि मोजनरतो नृपतिर्नितान्तं तोषं पुपोष कवितासुत वाथ कीर्तिम् ॥
भूपा न सम्प्रति तथाविधतां दधानास्तस्मात्कवेरपि ममप्रचुरा न
कीर्तिः ॥ ४ ॥

मिथ्या ममोक्तिरखिलेति तवैव नामव्यस्तं विचारितमसूचयदेव विज्ञान् ॥
तस्माद्ददामि परिवर्तय नाम नैजं मामन्तरा तव रहस्यमवैति को वा ॥ ५ ॥

पायंपायं तव कविमणेः कीर्तिपीयूषधाराम्
कारंकारं मनसि कुतुकं तावकीनैर्वचोभिः ।
नामंनामं कपटमहतीं तुभ्यमेतामवोचम्
क्षामंक्षामं वितरसुधियं मह्यमानंदमर्थम् ॥ ६ ॥

---

# सौन्दर्योपासकः कविः कालिदासः ।

ले. सूतदेवशर्मा हंस शास्त्री अध्यक्ष हिन्दी संस्कृत विभाग मालेरकोटला स्टेट [पंजाब]

जयन्ति ते सुकृतिनो रस-सिद्धाः कवीश्वराः। नास्ति येषां यशःकाये जरामरणजं भयम् ॥ ( जल्हणः )

तया कवितया किं स्यात्तया वनितयाऽपि किम् । पद--विन्यास--मात्रेण यया नापहृतं मनः ॥ ( कश्चित् )

परिवर्तनशीलेऽसारेऽपि संसारे जनिमवाप्य विद्याऽऽप्तिरतीवपूर्व-जन्म-कृत-पुण्य-फल-प्रसवेति सर्वैरपि विपश्चिदपश्चिमैः कथ्यते नाम । विद्यामधिगत्यापि जगत्यत्र कवित्वशक्तिः श्रीभगवती-वीणापाणि-सरस्वती-चरम-प्रसाद-साधनीभूतेति आम्नायते । सैव कवित्वशक्तिर्यामधिगत्य " दुःखमयं जगत् " इति अनिशं दुःखज्वाला-जाज्वलमानचेतसः पुरुषा मधुरसान्द्रासु मञ्जरीषु भ्रमरा इव " आनन्दमयं जगत् " इति अखण्ड-स्वप्रकाश-आनन्द-चिन्मय-गुञ्जार-तुन्दिलाः सुखमनुभवन्ति, स्वानुभूति-बलेन सुखसाधनपथ-प्रदर्शकस्य प्रकृतिनिरीक्षणसक्षणस्य कविविचक्षणस्य विषये तु अपारानन्द-पारावारस्य सीमैव केति स्वयमनुमातुं प्रभवः प्रेक्षावद्भिमवः सुधियः । तत्र नैके कवित्वजातिभाजो कविक्रान्तम्मन्या असंख्या नाममात्रकवयः प्रतिगृहं जायन्ते, परं विदग्धमुखमण्डनाः विश्वकुतूहलजननप्रकाण्डाः अन्धकार-निचये मार्त्तण्डा इव राजन्ते केचिदेव कविताकामिनी-कटाक्ष-विक्षेपविक्षेपणाः अमरकवयः । एष्वेव अग्रगण्यः कविता--कामिनी-कमनीयकान्तः कविकुल-तिलकः श्रीकालिदासः केन नाम न श्रवण-पथं नीतः, संस्कृतसंसारे सुहित-साहिती-साधनसाधनः को वा जनो मन्त्रमुग्ध इव न कृतोऽस्य कवित्व-रचना-सौन्दर्य-प्राचुर्येण । स्वीयामर-कृतिभि र्वाग्वधूं मण्डयन्नयं कविवरः प्रायः सर्वत्र शृङ्गार-प्रधानां कवितामातनोति, तत्रापि धर्मप्रधान-शृङ्गार-वर्णन मेवास्य लक्ष्यम् ।

"मेघदूतम्" "शाकुन्तलम्" च द्वे एव एतत्कथनासाधारणप्रमाणे, यत् कालिदासो मानवीयचाञ्चल्य-पूर्ण-मोहक-सौन्दर्य-मार्गेण स्वर्गीय-शान्त-पवित्र-सौन्दर्य-साक्षात्करणं अनुभवेनानुभावनञ्च स्वीयकाव्य-साधनायाः लक्ष्यं मन्यते स्म। कालिदासीयकाव्येषु यत्रतत्र वस्तुतत्त्वं, सञ्जीवनं, परमाऽनुभूतिश्च लभ्यते। कविवरोऽयमपारसौन्दर्याकूपारतत्त्वविज्ञस्तद्व्यक्तीकरणे परमकुशलः, अलौकिक-सौन्दर्य-परिनिष्णातश्चासीत्। अयम् अणौ महान्तं, मानवे स्वर्गं, जीवने अमरत्वम् प्रमुग्धायां शकुन्तलायां नारी-हृदय-गाम्भीर्यस्य, सौन्दर्यस्य, अलौकिकतयाश्च आभासमात्रमेवाऽऽभासयति स्म, प्रत्युत तं सजीवतया सौन्दर्येण च सम्यग् अन्वरूपयदपि। प्रकृति-निरीक्षणव्यक्त्यो र्यत्कौशलं कविवरेऽस्मिन्नस्ति, तदन्येषु स्वल्पेष्वेव भविष्यति। किं बहुना, अर्वाचीनाः प्राक्तनाः पाश्चात्याः पौर्वत्याश्च सर्वे एवास्य कवित्वरचनाचातुर्यं मुक्तकण्ठं प्रशंसन्ति। अत एव जर्मनप्रसिद्धकवेः "गेटे" महोदयस्य पद्यमात्रपठन-प्रमुग्धस्येदमस्ति कथनम्। यस्यायं भावः यत् "यदि कश्चिन्नववसन्तस्य पुष्पाणि परिणतवसन्तस्य च फलानि मानवस्वर्लोकयोः सादृश्यं च एकत्र दिदृक्षेत्तर्हि सः कालिदासीयं शाकुन्तलम् ईक्षेत तत्रावाप्स्यतीति"। विवेकशीलेनानेन पर्यालोचकेन तथ्यमेवोक्तम्। आसीत् खलु कालिदासः सौन्दर्य-परीक्षको निरीक्षकश्च। तस्य सौन्दर्योपासना-श्रीगणेशः "मेघदूते" पार्थिव-शारीरिक-सौन्दर्य-वर्णने कथं कौशलेन सिद्धहस्ततया चोपलभ्यते तथा हि—

"तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी, मध्ये क्षामा चकित-हरिणी-प्रेक्षणा निम्ननाभिः। श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां या तत्र स्याद् युवति-विषये सृष्टिराद्येव धातुः॥ इति॥

अपारं पार्थिव-सौन्दर्यमपि कालिदासदृष्टौ नास्ति पर्य्याप्त-तरम्। सौन्दर्ये शिव-रूप-परिणामाभावे केवलं आपातमात्र-रमणीयायाः सुन्दरतायाः नास्ति किमपि मूल्यम्, यावत्तत्र चारुता चर्चिता न स्यात्। तथाहि—कुमार—सम्भवे स्वानुरागस्य असाफल्येन दुःख-मग्ना सती "निनिन्द रूपं

हृदयेन पार्वती " । किम् अस्यापि नाम " सौन्दर्यं " रूपयितुं शक्यते ? यत्सत्त्वेऽपि सा भग्नमनोरथा बभूव, न हि न हि, सौन्दर्यसाराऽऽसारसरलः कविः स्वयम् आदर्शयति सौन्दर्यं निर्णयति च—

" प्रियेषु सौभाग्यफला हि चारुता " इति ।

अस्याश्चारुतायाः प्राप्तिः कथं भवेन्नाम ? अत्र पार्वत्या उत्तरं कविशब्दैरेव, तथाहि-'इयेष सा कर्तुमवन्ध्यरूपतां समाधिमास्थाय तपोभिरात्मनः। यतः—

अवाप्यते वा कथमन्यथा द्वयं तथाविधं प्रेम पतिश्च तादृशः' ॥ इति ॥

श्रीकालिदास-सूक्ष्मेक्षिकायां सौन्दर्यं तावदपर्याप्तमेव भवति, यावच्चारुता समाधि-तपश्चर्ययोः शरणेन " तथाविधं प्रेम पतिश्च तादृशः " अवाप्तुं सुयोग्या न जायते, तावद् उचिततरमेव यत्पार्वती रूपं हृदयेन निनिन्देति। पार्थिवसौन्दर्यस्य अपूर्णतायाः वस्तुतस्तस्य सौन्दर्याभिधानाय अयोग्यताया एतदपेक्षया श्रेष्ठमुदाहरणान्तरं अन्यत्र नैव सुलभम् परं कालिदासस्य पार्थिवसौन्दर्यवर्णनमेवंविधमपि अस्ति, यत्प्रकटयति, यत्कविराजहंसोऽयं सौन्दर्यं शान्तिमय-अलौकिक-असीम-आनन्दस्य साधनमपि मन्यते, तत्प्रतीकमपि । तथाहि—शकुन्तलायाः चाञ्चल्यं तस्याः सौन्दर्ये सहायकमासीत्, परं कुशलेन कविना शकुन्तला कण्व-तपोवनीय-जीव वृक्ष-लताऽऽदिभिः एवं सुन्दरे सुकोमले च स्नेहसूत्रे बद्धा, येन तस्य व्यक्तौ तपोवनस्य, पृथ्व्याः प्रकृतेश्च पवित्रं सौन्दर्यं समुज्जीवनदीपनं गतम् । सुन्दर्याः शकुन्तलायाः सौन्दर्योपहितेन तपोवनेन सह कियान् सरलः सुन्दरः स्नेहमयश्च सम्पाद्यः कविना निर्दर्शितः अवलोकनीयमेवास्ति तावत् तथाहि—

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या,
नादत्ते प्रियमण्डनाऽपि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुम-प्रवृत्ति-समये यस्या भवत्युत्सवः,
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥ इति ॥

एवं प्रायः सर्वत्रैव कीदृक् हृदयग्राहि सरलं सत्यं च वर्णनमस्ति । अतोऽप्याधिक्येन व्यापकः सम्बन्धः कुमारसम्भवे कविना उपमाबलेन प्रकटितः । अवलोक्यतां तत्र पार्वतवर्णनम् तथा हि—

सा मङ्गलस्नान विशुद्ध-गात्री गृहीत-प्रत्युद्गमनीय-वस्त्रा ।
निवृत्त-पर्जन्य-जलाभिषेका प्रफुल्लकाशा वसुधेव रेजे ॥

नास्त्यत्र शृङ्गारे कृत्रिमता-क्लेशः । इदं पृथिव्याः पारस्परिकस्य सौन्दर्यस्य स्नेहमयसम्बन्धस्य च स्वाभाविकं रूपमस्ति । अत्र सौन्दर्यवर्णने प्रकृति-प्राणिनोस्सामञ्जस्य चित्रमस्ति । प्रकृतिपुरुषयोरेकात्मताया उदाहरणान्तरं कुमारसम्भवेऽवलोकनीयम् तथाहि—एकत्र—

मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्त्तमानः ।
शृङ्गेण च स्पर्श-निमीलिताक्षी मृगीमकण्डूयत कृष्णसारः ॥

अन्यत्र तदनुराग-भावना-भावितः—

हरस्तु किञ्चित्परिलुप्तधैर्यः चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥

अन्यच्च—

विवृण्वती शैलसुताऽपिभावमङ्गैः स्फुरद्बालकदम्बकल्पैः ।
साक्षीकृताचारुतरेण तस्थौ मुखेन पर्यस्त-विलोचनेन ॥

विभावयंस्त्वत्र सद्भावभावितांस्तद्भावुकाः भ्रमरमृगौ शिवपार्वत्यौ च समत्वभावनाभावितौ ऐक्यतामेवापन्नौ । अत्र कवेः दृष्टिरेषां समेषामत्र आचरणसौन्दर्ये तत्कारणसौन्दर्ये चापतिता, परं तया केवलं एतद् आलोच्यते, परिचाय्यते, ज्ञाप्यते एव न प्रत्युतसर्येऽपि समसौन्दर्य-सूत्रे ओतप्रोता अपि । पूर्वमालोचितं एतेन निर्विवादं सिद्ध्यति यत्सौन्दर्यमन्योऽपि कालिदासः " प्रियेषु सौभाग्यफला हि चारुता " अतैव सत्ये शिवे सौन्दर्यरूपे एव सौन्दर्ये विश्वसितिस्म । कालिदासेन स्वीयकाव्येषु मानवजीवनलोकयोर्विषये प्रेम प्रकटितम् । परं तयोरनन्तेन ( असीमेन ) सदृशकामताया: विश्वासोऽपि यत्रतत्र निर्दिष्टः । सत्यमेव आसीत् कविः आदर्शसौन्दर्योपासकादर्शः । तदीयसौन्दर्योपासनास्वर्गमर्त्ययोः पदेपदे वास्तविकतां सुन्दरतांच प्रमाणयति । कालिदासः शान्तेः अमरतायाः सुन्दरताया एवाऽऽराधनेन तिसृणामेव एकरूपतां स्वयमनुभवति अनुभावयति च सहृदयान् इति अलमतिपल्लवितेन ।

श्रद्धेयस्य तस्यैव शब्दैः स कथयितुं शक्यते—

ज्ञानप्रदीपेन तमोऽपहेन विनश्वरेणास्खलितप्रभेण ।
भूतं भवद्भावि च यच्च किञ्चित्सर्वज्ञ ! सर्वं तव गोचरं तत् ॥ इति ॥

---

# कालिदास-प्रशस्तिः

[ विरचयितारः—न. चिं. केळकराः पुण्यपुरस्थाः ]

' यद्यद्धि सुंदरं लोके तन्नित्यानन्दकारणम् '
इत्युक्तिः सार्थतां याति कालिदासस्य वाङ्मये ॥ १ ॥
आर्यभूम्यां स एवैकः कविः श्रीमान् ।
विश्वकीर्तिर्जिता येन रक्षिता च युगे युगे ॥ २ ॥
शार्मण्यकविसम्राजां श्रूयतां यत् सगद्गदम् ।
भणितं कालिदासस्य गुणवर्णनहेतुतः—॥ ३ ॥
" यदि वाञ्छसि सौभाग्यं वसन्तस्य नवागमे ।
पुष्पावतारकाले च गंधं भ्रमरसेवितम् ॥ ४ ॥
तथैव फलसंपत्तिं परिपाकमनोहरम् ।
येन येन भवेदात्मा मोहितो मुदितस्तव ॥ ५ ॥
लप्स्यसे खलु तत्सर्वमुद्याने कविनिर्मिते ।
भूस्वर्गलोकावेकेन नाम्ना यदि निबध्यताम्—॥ ६ ॥
अप्रयासेन सिध्येत तच्छाकुन्तलनाटके ।
गिरिश्रेण्युपमा प्रज्ञा प्रतिभा च तडिद्द्युतिः ॥ ७ ॥
वाचां प्रसादमाधुर्यं सुसरिज्जलसन्निभम् ।
सत्त्वपूर्णं हि तात्पर्यं सुगूढं फलबीजवत् ॥ ८ ॥
यथौषधिर्वैद्यदत्ता तथा बोधो हितप्रदः ।
वर्णिते गुणसंघाते दिव्यकामस्य तत्कवेः ॥ ९ ॥
असामान्यो गुणो ह्येकः कालिदासे विशिष्यते ।
' उपमा कालिदासस्य ' यदुक्तं तदबाधितम् ॥ १० ॥

अद्यापि न कविः कोऽपि समर्थस्तद्विचालने ।
' साधर्म्यमुपमाभेदे ' तदलंकारलक्षणम् ॥ ११ ॥

साधितं कविवर्येण द्वैताद्वैतसमन्वये ।
उपमेयोपमाने स्तो वागर्थाविव संगतौ ॥ १२ ॥

धर्मोऽस्तु व्यवहारो वा गूढार्थं तत्त्वदर्शनम् ।
नानार्थलोकचारितमस्तु वा सृष्टिवर्णनम् ॥ १३ ॥

मुनितापसवासोऽस्तु शोभनं राजमन्दिरम् ।
वनोपवनशोभा वा पर्वतान्तर्गतं तमः ॥ १४ ॥

करोति प्रतिभादीपेनोज्ज्वलं सुंदरं तथा ।
तस्योपमा दर्शयन्ति कवेः पाण्डित्यवैभवम् ॥ १५ ॥

नानाशास्त्रविमर्शश्च लीलया प्रकटीकृतः ।
अनौचित्यमसाधुत्वमप्रयोजकतान्वितम्—॥ १६ ॥

अमङ्गलं तथाऽश्लीलमपसिद्धान्तितं पुनः ।
अंशतोऽपि हि दृश्यन्ते दोषा एते न कुत्रचित् ॥ १७ ॥

गुणाढ्ये कालिदासस्य काव्ये बहुकलात्मके ।
दृष्टिपूतं गजश्रेष्ठो न्यस्यति स्वं यथा पदम् ॥—॥ १८ ॥

तथैवासौ पदन्यासं करोति कविकुञ्जरः ।
आविष्करोति सुरसं मधुभृन्मृत्तिकाघटः ॥ १९ ॥

बिन्दुस्रावेण सर्वाङ्गलिप्तो रसिकभुक्तये ।
तथैव कालिदासोऽपि संतोषाय रसार्थिनाम् ॥ २० ॥

स्वकाव्यनाटकघटैः कुरुते रसनिर्मितिम् ।
एषोऽर्पितः पद्यबद्धश्चरणे सुमनोऽञ्जलिः ॥ २१ ॥

रसाकृष्टान्तरङ्गेण मया प्रणतिपूर्वकम्—।
तेन तस्य कवेरात्मा स्वर्गस्थस्य प्रसीदतु ॥ २२ ॥

---

# "कालिदासीयः शृङ्गारः"

[ लेखकाः प्रा. डा. के. ना. वाटवे, एम् ए. पी. एच्. डी, पुण्यपत्तनस्थाः ]

नैतदपरोक्षं प्रेक्षावतां यद्— सर्वेऽपि भारतीयाः साहित्यशास्त्रप्रणेतारो रसमेव काव्यजीवातुभूतं परं तत्वं समाम्नाशिषुः। नाट्यशास्त्रस्य आद्यः प्रवर्तयिता तत्रभवान् भरतमुनिर्नाट्यं "नानाभावोपसंपन्नं" प्रतिपद्यमानो (नाः शा. १. ११२) 'न हि रसादृते कश्चिदप्यर्थः प्रवर्तते' इति च प्रतिजानानो नाट्यशास्त्रस्य षष्ठेऽध्याये रसनिष्पत्तिं प्रपञ्चपूर्विकां व्यवारीत्। भामह-दण्डि-विश्वनाथप्रभृतयोऽपि शास्त्रकृतो "युक्तं लोकस्वभावेन रसैश्च सकलैः पृथक्" (काव्यालंकारे १–२१), "रसभावनिरन्तरम्" (काव्यादर्शे १-१८) "नानारसनिरन्तरम् (सा-दर्पणे ६-८) इति तत्र-तत्र महाकाव्यलक्षणं निबध्नन्तो महाकाव्यस्य रसानुप्राणिततामेव स्वीचक्रुः। काव्यं किल दृश्यं वा श्रव्यं वा भवतु उभयप्रकारकेऽप्यस्मिन् रसनैरन्तर्यमवश्यं भावि इति सर्वैरपि प्रतिपन्नोऽयमर्थः। लोकस्वभावो गुणत्रयात्मकः। अतस्त-दाश्रयाणां काव्यनाटकादीनां तत्प्रतिरूपकाणां सत्वरजस्तमोमयता स्वभावत एव प्राप्नोति। सत्वरजस्तमःस्वरूपैः शान्तवीरशृङ्गारहास्यबभित्सप्रभृतिभिः सर्वैरपि रसैर्युक्तानि महाकाव्यानि नाटकोत्तमानि च किमितिप्रायेण प्रवर्तन्ते इत्येतस्माद्विदितं भवेत्।

एवं लोकचरितस्य नानारसतया तदाधारां काव्यनिर्मितिमपि नवरस-रुचिरां विधातुं यद्यपि यत्नवन्तः कवयो दृश्यन्ते, तथापि सर्वोऽपि कविः सर्वेषामपि रसानामाविष्कारे तेनैव लोकातिगेन कौसल्येन प्रभवेदिति नैष सामान्यो नियमो विधातृसृष्टयामस्याम्।

"प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः" (कुमार ३–२८) इतिन्यायेन सर्वरसनिर्माणचातुरी प्रायेण एकस्मिन्नेव कवयितरि न संभाव्यते। तथा च 'कस्यापि कोप्यतिशयोऽस्ति स तेन लोके ख्यातिं प्रयाति, नहि सर्वविदस्तु सर्वे'। इत्युक्तदिशा सृष्टिस्वभावानुरोधान्न एकस्य रसस्य परिमितरसानां वा निर्माणे कोविदोऽपि क्षमः परिदृश्यते। अत-

एव आदिकवेर्वाल्मीकेः करुणरसनिर्माणे, भगवतो व्यासस्य शान्तरसाविष्कारे, सुबन्धुदण्डिबाणपुरोगानां अद्भुतनिष्पादने, शुकजयदेवादीनां भक्तिरससर्जने, ' कारुण्यं भवभूतिरेव तनुते ' इति वचनाद् भवभूतेः करुणरसनिर्मितौ, शूद्रकस्य हास्यनिष्पत्तौ, भट्टनारायणस्य वीररसोत्पादने सविशेषां प्रसिद्धिं मुक्तकण्ठं जगुस्ते ते रसिकाः । यद्यपि कालिदासः कविकुलगुरुर्निखिल्यापि सुपुरुषोत्पादनोपकरणसंपदा विधात्रा निर्मितो नवरसशालिनीं काव्यवाटिकां निर्मिमाणो दृश्यते, तथापि तस्यापि कोऽप्यतिशयोऽस्ति येन, असावपि काव्यतत्त्ववित्सु ख्यातिं प्रयातः । को नाम सोऽतिशय इति चेत् ' शृङ्गारः ' ' शृङ्गारः ' ' शृङ्गार ' इति विश्वतोमुखी वाणी श्रुतिपथमवतरेत् । ' एको न जीयते हन्त कालिदासो न केनचित् । शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु ' इति सूक्तिमुक्तावल्यां घोषयन् राजशेखरः, " साकूतमधुरकोकिलविलासिनीकण्ठकूजितप्राये । शिक्षासमयेऽपि मुदे रतिलीला-कालिदासोक्ती " । इति आर्यासप्तशत्यां समुद्गिरन्तो गोवर्धनाचार्या एतन्मतं प्रमाणयन्ति । ' कालिदासः कविताकामिन्या विलास इति प्रसन्नराघवे वदन् जयदेवः ' कालिदासः स्त्रीहृदयज्ञ ' इतिच अभिप्रयन्तः श्रीवल्लभाचार्या एतदेव पुनः स्थिरीकुर्वन्ति । आस्तां नाम कालिदासस्य उपमायोजने परमं चातुर्यं, परं तस्य उपमा यमर्थमलङ्करोति स प्रायेण शृङ्गाररसात्मक एव । एवं स्थिते, कालिदासकाव्यविशेषभूतोऽयं शृङ्गाररसः कियत्प्रमाणः किंस्वरूपश्चेति अधस्तनीषु कासुचित्पङ्क्तिषु स्थलानुरोधं समासत एव पर्यालोचयामः ।

मालविकाग्निमित्रविक्रमोर्वशीय—शाकुन्तलेतिनाटकत्रयीं, ऋतुसंहारमेघदूतेतिखण्डकाव्यद्वयं, कुमारसंभवरघुवंशेति च महाकाव्यद्वितयं निर्ममे तत्रभवान् कालिदासः । अस्यां निर्मितौ शृङ्गाररसप्रधानानि त्रीण्यपि नाटकानि, विप्रलम्भशृङ्गारधनं मेघदूतं, ऋतुवर्णनपरमपि प्रणयिचित्तवृत्त्यनुगुणत्वात् शृंगारप्रवणमेव ऋतुसंहारम् इति यस्य कस्यापि स्थूलदृशोऽपि नयनगोचरं स्यात् । गभीरार्थप्रचुरेऽपि महाकाव्यद्वये अन्तरान्तरा शृंगाररसः प्रादुर्भवत्येव । एवं शृंगाररसप्रधानता कालिदासीयानां काव्यानां प्रदर्शयितुं शक्या । कालिदासस्य करुणोऽपि प्रायेण शृंगाररसाश्रय इति रतिविलापाजविलापस्वरूपात् परिदृश्यते । वीररसोप्यस्य क्वचित् शृंगारसंवलितो दृश्यते । यथा रघोः सप्तमे

सर्गे ( श्लोकाः—६२—६९ ) । हास्योऽप्यस्य शृंगारावलम्बी । यथा विदूषकोक्तिषु । एवं भवभूतिकृतौ यथा ' एको रसः करुण एव निमित्तभेदाद् भिन्नः पृथक् पृथगिव श्रयते विवर्तान् । ' तथा कालिदासकृतिषु शृंगार एव एको रसो रसान्तराधार इवात्रभासते । समर्थितं च तद् अग्निपुराणकारैः यद् शृंगार एव प्रमुखो रसः । ' तद्भेदाः काममितरे हास्याद्याअप्यनेकशः ' इति ।

एवं कालिदासोक्तिषु शृंगारमतिप्रमाणमालोक्य तस्य स्वरूपं निश्चिनुमः । कालिदासीये शृंगारे आलम्बनविभावतां प्राप्ता नायिका नायकाश्च प्रायेण देव-देवताविशेषाः ( यथा पार्वती, शिवौ ) यक्षयोनयः, ( यथामेघदूते यक्षो यक्ष-पत्नी च ) अपरे राजानो राजपत्न्यश्च । तथा च राजानो बहुवल्लभा दृश्यन्ते । विद्यमानायामपि प्रथमधर्मपत्न्यां, सति पुत्रे पराक्रमशालिनि, अग्निमित्रस्य मनः राज्ञीपरिजनमध्यगतायां मुग्धायां मालविकायामासक्तम् । ' नहि कमलिनीं दृष्ट्वा ग्राहमवेक्षते मतंगजः ' इति वदन् यत्सत्यं मतंगज इव असौ राजा प्रतिबध्ननीमिरावतीमविगणय्य विदूषकसहायः स्वकीयं मनोरथं पूरयति । दुष्यन्तोऽपि मृगयां गत आश्रमस्थामेकाकिनीं कन्यकां तद्रूपसंपदाकृष्टहृदयो गान्धर्वेण विधिना परिणयति । पुरूरवा अपि सुराङ्गनायामुर्वश्यां बद्धभावः स्वधर्मपत्न्या औशीनर्या विरोधं सुदूरमपसार्य स्वकीयं वाञ्छितं हठादिव सफलयति । उर्वश्या परित्यक्तश्च उन्मत्त इव वने परिभ्रमति । प्रणयपरिरक्षणे राजधर्मानपि विस्मृत्य गन्धमादने निवसति । कुमारसंभवस्य अष्टमे सर्गे देवताया उमायाः सुरतवर्णनं मानुषीसामान्यं कृत्वा न केवलमाधुनिकानां किन्तु रसिकवरेण्यस्य आनन्दवर्धनाचार्यस्य उपालभ्यो बभूव कालिदासः । अस्य नायकनायिका न केवलं मानुषसंभवा, अपितु वृक्षलताः भ्रमरभ्रमर्यः, मृगमृग्यः मेघसरितः, जलदबलाकाः पर्वतपुर्यः इत्याद्यनेककोटिगतास्तिर्यग्योनयः क्वचिच्च आरोपितचैतन्या जडा अपि परिदृश्यन्ते ।

एतेषां सर्वेषामपि प्रणयवर्णने क्वचिदुत्तानः क्वचिन् मुग्धश्च शृङ्गारः प्रकटीकृतः । परमेतदवधारणीयमस्मिन् विषये यत् सशृंगारः —क्वचिदनुचितो भवतु उचितो वा, उत्तानो भवतु मुग्धो वा — एतादृश्या कोमलयागिरा,

असामान्येन प्रतिभागुणेन, अलौकिक्या व्यवहारावलोकनचातुर्याच उपवर्णितो वर्तते यत् रसिकस्यमनो विगलितवेद्यान्तरमानन्दं कमप्यनु भवति। निसर्गतः शृंगाररसप्रवणानि खलु मानवानां चेतांसि। अतएव आनन्दवर्धनाचार्यैः 'शृङ्गाररसो हि संसारिणां नियमेन अनुभवविषयत्वात् सर्वरसेभ्यः कमनीयतया प्रधानभूतः' इति प्रतिपादयद्भिः शृंगारस्य रसराजत्वमुररीकृतम्।

कालिदासीया इयं शृंगाररसप्रवणता अनितरकविसाधारणी कुतः प्रादुर्भूता इति विचारणीयम्। यस्य कस्यापि कवेर्विशिष्टगुणसंयुता काव्यसंपद् तस्य स्वभावविशेषादेव प्रादुर्भवतीति प्रायः संमतं सर्वेषाम्। परं कवीनां बहवः प्रवृत्तयः कालनिर्भिना देशनिबद्धाश्च परिदृस्यन्ते यस्मिन् काले यस्मिन् देसे यस्यांच परिस्थितौ कविःप्रादुर्बभूव तत्कालदेशपरिस्थितिनियंत्रितं तस्य काव्यं भवति। केवलं प्रणयमेव लक्ष्यीकृत्य अवलोकितंचेत् रामायणमहाभारतादौ तादृशी शृंगारप्रचुरता नेक्ष्यते यादृशी तदवलम्बिनीषु काव्यनाटककृतिषु। यादृशो भासकविकृतिषु शृंगारो न तादृशो भवभूतिकृतनाटकेषु। कालिदासप्रणीतेषु ग्रन्थेषु वा वर्णनीये विषये एकस्मिन् सत्यपि वर्णनारीतिर्देशकालभेद कृतत्वात् अन्येव परिदृस्यते। कालिदासविषये विशेषतः किमासीत् एतादृशशृंगारप्रवृत्तिनिमित्तमित्यवलोकयामः।

कालिदासः खिस्तपूर्वप्रथमशतके वा गुप्तनृपालानां काले वा सञ्जातो भवतु, यस्मिन् काले असौ प्रादुरभूत्तदा उत्कर्षस्य परां काष्ठामारूढमासीद् भारतवर्षम्। सर्वत्रापि कृतदिग्विजया भूपालः, सौराज्यसंतुष्टाः प्रजाः, सस्यशालिनी मही, धनधान्यसंपन्ना वैश्याः, सम्मानितविद्या विप्राः, जितशत्रवः क्षत्रिया आसन्। किंबहुना स्वविभवेन अधरीकृतसुरलोकं बभूव महीतलम्। एवंस्थिते तस्य कालस्य या स्वाभाविकी विलासप्रियता, यच्च नैसर्गिकं प्रणयप्रवणत्वं, यद्वा राज्ञां कामचेष्टितं तत्तद् यदि कालिदासीये काव्ये व्यक्ततामापन्नं स्यात् कस्तत्र विस्मयावकाशः। यादृशी स्त्रीविषयिणी दृष्टिस्तादृशस्तस्मिन् काले शृंगार इति निश्चेतुं शक्यम्। प्रायेण उपभोगप्रधानो विलासदत्तावकाशश्च कालिदासीयः कालः। अतस्तस्य काव्यानि शृङ्गाररसप्रधानानीति प्राप्तम्॥

---

# कालिदासः

[ ले० क. वे. कृष्णमूर्तिशास्त्री प्रा. वि. सं. मन्दिरम् पूना ]

नास्त्येव कोऽप्यस्मिन्नवनीतले भारतीयेषु वैदेशिकेषु वा विद्याविनोदरसिकेषु यः कल्पान्तविख्यातकीर्तिं कविराजसार्वभौमं श्रीकालिदासं न जानाति। वाग्देवीप्रसाद एव मूर्तः श्रीकालिदासरूपेण भुवमवतीर्य संसारदुःखकदर्थितानां जीवानां हृदयानि रञ्जयित्वा कंचित्कालं, तिरोऽधत्तेति चेन्नेयमतिशयोक्तिः। लोकानां धर्मस्वरूपं नीतीस्तत्त्वज्ञानं च बोधयितुं यथा पुरुषोत्तमचतुराननौ मानुषरूपेणावतीर्य श्रीमहाभारतरामायणे समस्तपुरुषार्थप्रदे प्रणिन्यतुस्तथैव लोकोत्तरगुणगणाकरोऽयं स्वकीयकाव्यानि समस्तगुणसंपन्नानि प्रणीयात्यन्तं प्रथिततरयशाः संचचार धरणौ श्रीकालिदासः। जन्म चात्मनः सफलीचकार। रघुवंशकुमारसंभवमहाकाव्ययोरेतदीयं कवित्वं लोकोत्तरं विभाति। प्रतिश्लोकं प्रौढतरोपमाद्यलंकारयुक्तं नवरसपरिपूरितं च सकृत्पठनमात्रेणाप्यनिर्वचनीयस्फूर्तिदायकं पदयोजनाचातुर्यमनन्यसाधारणमस्य चकास्ति। शिल्पिवर्यैः प्रणीतास्वपि सुन्दरतरशिलामूर्तिषु आलयप्रतिष्ठितासु वैदिकमन्त्रैः भगवत्सांनिध्यं यथा समुत्पन्नं भक्तजनवशीकरणक्षमं राजते, तद्वदेव सुलभतरशब्दसंयोजितश्लोकेषु वाग्देवी सप्राणैव नृत्यतीव। इदं सर्वं तद्ग्रन्थाध्ययनाध्यापनप्रवृत्तानामनुभवैकवेद्यम्।

सकलकविमूर्धन्योऽयं कालिदासः कं देशं स्वजन्मनाऽलंचक्रे, कस्मिन्काले, कोऽस्य पिता, माता वा पवित्रजठरा इत्यादिविषये न किमप्यस्माकं तृप्तिदायि प्रमाणमुपलभ्यते। निसर्गत एव महोदाराः भारतीयाः प्राञ्चः स्वस्वचरितविलेखने उदासीना इतीदमाधुनिकसंशोधकानां पाश्चात्यविद्यासंप्रदायसंस्कृतचेतसां नियतमनल्पं वैक्लव्यमापादयति। यतो ह्येते प्राचीनकवीनां कालविनिर्णये बहुधा प्रयतमाना अपि पर्याप्तप्रमाणमनुपलभमानाः स्वस्वप्रतिभानुरूपं युक्तिवादैनैव यत्किंचित्समर्थयन्तोऽद्यापि परस्परं विवदमाना वर्तन्ते। प्रकृतकविविषये चायं क्रिस्तुजननात्प्राक्प्रथमशतकोत्पन्न इति बहवो विचार-

निपुणा अभिप्रयन्ति । क्रिस्तोरनन्तरं पञ्चमशतक इत्यपरे मीमांसन्ते । भवभूतेः समकालिकोऽयमिति कथयन्तः " किमपि किमपि मन्दं " इत्युत्तररामचरितश्लोकस्य टीकायां बिन्दुमात्रं विशिष्यते इति [ रात्रिरेवं व्यरंसीदित्यत्र ] समुल्लिखन्तं वीरराघवम् अनुसरन्तः कथामपि समुपस्थापयन्ति । भवभूतिस्त्वष्टमंशताब्द्यामुत्पन्नः इति विमृशन्तस्तदाक्षिपन्त्यपरे प्रतिभाशालिनः । तथा काश्मीराभिजनोऽयं कालिदास इति तत्रत्याः, वङ्गीय इति वङ्गाः, उज्जयिन्यभिजन इति तत्रत्याः आन्ध्रदेशीय इत्यान्ध्राः । सर्वेऽपि यत्किंचित्प्रमाणोल्लिखने बद्धादरा एव । परं त्विदमिति न कश्चित्प्रभवति निर्धारयितुम् । सर्वेषु च पूर्वकविषु इयमेव गतिः । तथा कालिदासः विक्रमसार्वभौमकालिक इति वदन्तोऽपि कोऽसौ विक्रमभूपतिः इत्यत्रापि परिभ्राम्यन्ति । भोजप्रबन्धेन भोजसमकालिक इत्यपरे । यथातथावा भवतु, तत्प्रणीतग्रन्थस्वारस्यं यथावदनुभवितुं प्रवृत्तानां नैतादृशविचारेण किमपि । अभ्यवहारोपविष्टः पुरुषः पटोल्या दैर्घ्यं स्थौल्यं वा किमिति विचारयति ? । सर्वथा कालिदासग्रन्थेषु शब्दसंयोजना कीदृशी ? कीदृशमर्थस्वारस्यं ? कीदृशो रसः ? का कथा ? कथं वर्णनापद्धतिः ? किमवगन्तव्यं तात्पर्यमित्यादिकमेव विचारार्हमन्यत्सर्वमप्यनुपयुक्तमेवेत्यास्तामिदम् ।

अस्य हि कवेः कर्णपरंपरया श्रूयमाणाः कथा अनन्ताः । तासु सरसकविताचातुरीधुरीणमप्येनं स्त्रीलोलं प्रतिपादयन्ते काश्चित् । हन्त तादृश्यः कथा निष्प्रमाणका इत्येव वयं प्रतीमः । एतत्प्रणीतकाव्यावलोकनेनायमुत्तमगुणसंपन्नः कश्चिन्महापुरुषः समस्तज्ञानसंपन्न इति च निर्धारयितुं शक्यम् । प्रतिश्लोकं च लोकोत्तमवस्तुभिरेवोपमालंकारं प्रयुञ्जानः " उपमा कालिदासस्येति " आभाणकस्याप्ययं लक्ष्यतां गतः । मेघदूतकाव्येऽस्य प्रकृतिसौन्दर्यवर्णनाचातुरी समस्तजनस्वान्तमोहकारिणी भवति, समस्त विज्ञानसंपन्नं च प्रतिपादयति । अभिज्ञानशाकुन्तलेच श्रृङ्गाररसप्रधाने नाटके दृष्टमात्रे तत्कविताधोरणी विजातीयमानन्दं वितरति रसिकानाम् ।

काव्यचतुष्टयं नाटकत्रयं चामुना प्रणीतमिति प्रथा जगति । 'संचारिणी' ति रघुवंशश्लोकस्वारस्यं विदन्तोऽमुं 'दीपशिखाकालिदास' इत्यभियुक्ता आव्हयन्ति ॥

पूर्वोक्तप्रकारेण सरसकवित्वविषये कल्पानाशक्तौ चैतत्कविसंबन्धिन्यः बह्वयः कथाः कर्णाकर्णिकया श्रूयन्ते । विवेकिनस्तु नैता विश्वसनीया इति मन्मन्ते । तास्वेकां चमत्कारजननीं कथामत्रोल्लिख्य समापयामीमं लेखम् ।

दक्षिणापथे कस्मिंश्चिद्राज्ये कश्चन शास्तृदेवालय आसीत् । एकस्मिन्दिने पूजकः पूजासमये प्रभाते तां शास्तृमूर्तिं शिलामयीमपि स्वनासिकोपरि विनिहिततर्जनीं विलोक्य नितरां परिभ्रान्तः भीतभीतो राज्ञे न्यवेदयत् । स च देवं तथा दृष्ट्वा स्वराज्ये अरिष्टं किमपि शङ्कमानः मान्त्रिकद्वारा तन्नसोऽङ्गुल्युद्धरणे बहुधा प्रयत्यापि न तथा कर्तुं शशाक । ततश्च योऽस्याः शिलामूर्तेर्नासिकातस्तर्जनीमुद्धरिष्यति स मे राज्यार्धं लब्धुमर्हतीत्युदघोषयत् । तदात्वे यात्राप्रसङ्गेन समागतः कालिदासः कंचन श्लोकं पठन्नासिकातोऽङ्गुलिमुदधीधरत् । सच श्लोको यथा—

अम्बेति गौरीमहमाह्वयामि पितुः स्त्रियो मातर एव सर्वाः ।
कथं नु लक्ष्मीमिति चिन्तयन्तं शास्तारमीडे सकलार्थसिद्ध्यै ॥ इति.

[ देवासुरैः समुद्रमथनानन्तरं प्राप्तामृतप्राशनाय कलहे संवृत्ते तच्छमनाय मोहिनीरूपेण समागतस्य श्रीमहाविष्णोः सौन्दर्येण मुग्धः परमेश्वरः मोहिन्या हस्तं सप्रेमनिर्भरं परामर्श । तदा विष्णोर्हस्तात्समुत्पन्नः शास्ता इति कथाऽत्रानुसंधेया ]

सर्वथा भगवत्या वाग्देव्याः प्रसादेन कविरयं कालिदासः सकलकविकुलशिरोरत्नमिति सर्वजनीनम् । तदनन्तरं च महामहिमशालिनः संख्यातिगाः महाकवयः इमां कर्मभूमिमलमकार्षुः, येषां ग्रन्थरत्नान्यद्यावधि सहृदयरञ्जकानि

विराजन्ते । तद्देशेऽस्मिन्भरतखण्डे प्रकृतकाले संस्कृतविद्यायाः संप्राप्तः परीभावः कस्य वा सचेतसो मनो न दुनोति ? अतः सर्वेऽपि विद्याविनोदरसिकाः समस्तभाषाजननीभूतां संस्कृतभाषाम् अभिवृद्धिं प्रापयितुं बद्धपरिकरा भूत्वा सुरभारतीप्रचयैककाङ्क्षिणीं "मधुरवाणी" मपि पूर्णभक्त्या समादरेण चोपबृंहयन्त्वित्यलम् ।

---

# कालिदासकालानुकूल्यम् ।

[ ले० भिषगाचार्यः त्र्यम्बकशास्त्री पुण्यपत्तनस्थः ]

कृपापारावारस्य परमेश्वरस्य वरदकरलालितकलेवराणामस्माकम् अमन्दभागधेयबलादेव खलु सकलभूतलललामभूतेऽस्मिन् भारते वर्षे जनुर्लब्धवन्तः स्ववाक्सुधाधवलितनिखिलवसुधातलाः कविकुलावतंसाः श्रीवाल्मीकिव्यासकालिदासाः । करालकालकवलिते गतेतिहासपुनस्स्मरणसाधनीभूते विश्वस्मिन्नपि वस्तुजाते यद्येतत्कवित्रितयं न नष्टं स्यात्तर्हि न किमप्यस्माकं नष्टमिति वक्तुं शक्यते । एतेषां मध्यादेकैकः न केवलं महाकाव्यरचयिता, अपितु तत्तत्कालीनजागतिकमानवसंस्कृतिप्रगतिम् आबुद्धिबलोदयं कथितवान् । तत्र प्रथमो वाल्मीकिकालः नैतिकयुगमिति पदवाच्यो भवितुमर्हति, बहुलत्वेन सामान्यनीतिनियमानुसरणान्मनुष्याणाम् । द्वितीयस्तु बौद्धिकयुगमित्यपरपर्यायो वैयासिकः बुद्धिवादप्रत्ययानुगमनाल्लोकानाम् । तृतीयः कालिदासीयः पुनः प्रायशः इन्द्रियगोचरप्रत्यक्षप्रमाणैकशरणत्वाज्जनानां भौतिकयुगमिति संज्ञामर्हति । आध्यात्मिकीं शक्तिमनुसृत्य आध्यात्मिकयुगमिति संज्ञासंज्ञितेनापि केनचिच्चतुर्थेन कालेन भाव्यम् परंच सकललोकैकशासकत्वेन एकाकिनस्तस्य नाद्यापि दर्शनं संजातम्, भविष्यति च काले कदा वा एतादृशः कालः समुत्पत्स्यते इति कोऽपि न जानाति । परंच उपरिनिर्दिष्टेषु त्रिष्वपि कालेषु सः अंशांशेन विद्यमान आसीदिति सुस्पष्टं स्यात्संख्यावताम् ।

बहुभिरेवमाक्षिप्तं यत् " यतो हि रामायणे आदर्शभूतो मनुजसमाजो वर्णितः तस्मादेव कारणात्, एतादृशस्य समाजस्य सर्वथा अदृष्टत्वाच्च एतादृग्वर्णनं वाल्मीकिना केवलमेव स्वकपोलकल्पितं कृतमस्ति इति । ये ये प्रसंगाः कविभिर्वर्ण्यन्ते ते सर्वेऽपि यायातथ्येन तैः स्वयमेव पूर्वमनुभूता इति न सत्यम्, तथापि तत्तत्प्रसंगस्य सूक्ष्मसूक्ष्माश्च या घटनाः यथोचितवर्णने क्रियमाणे सति अननुभूततादृशप्रसंगस्य कवेः वैकारिकाणि वैचारिकाणि वा कानिचित् स्खलितानि अवश्यंभावितया अपरिहार्याण्येव भवन्ति । अयस्तनीयस्वयंगन्त्रीवर्णनं ( मोटर ) वियद्यानवर्णनं वा यथार्वाचीनैः कविभिः क्रियते, न तथा प्राचीनैः कविभिः कर्तुं सुशकम् ; कृतेऽपि चेत्, तत्तद्यन्त्रप्रेरककारणविवरणे किंचिदिव मतिविभ्रमरूपं स्खलितं दृष्टिपथमागच्छेदेव । वाल्मीकिव्यासकालिदासैः पुनः स्वकीयकाव्येषु तथा वर्णनं क्रियते यथा घटनात्मकं विचारात्मकं वा न किमपि अयथातथ्यकथनं नयनगोचरीभवति ।

रामायणमहाभारतयोः सूक्ष्मेक्षिकया अवलोकनं कृतं चेत्, ये ये विषयांशा सुस्पष्टतया आविर्भवन्ति त एवम् — उभयत्र राजकीयसामाजिकभूमिकयोः काचन समानता दृश्यते, वस्तुभागस्यापि किंचिदिव समानत्वम् । अतिप्रबलानामुन्मत्तानांच क्षत्रियाणां आसुरी वृत्तिः कामपि परां कोटिमधिरूढा आसीत् । तेच ' काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः, आशापाशशतैर्बद्धाः, कामक्रोधपरायणाः ' सन्तः ' असौ मया हतः शत्रुर्हनिष्ये चापरानपि, ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी, आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ' इत्येवं मन्यमाना अभवन् । एतादृशीं मनोवृत्तिं निहत्य, यथा भूमेर्भारो लघुतरः स्यात्तथा प्रयतितव्यमिति उभयत्र उद्दिष्टम् । एतावती वस्तुभागसमानता । किंच रामायणे ' तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ' इत्येवंविधैर्गुणैः युक्तस्य पक्षस्यैकस्य प्रतिस्पर्धित्वेन स्थापितः कश्चन अपरः अमानुषः समाजो वर्तते । महाभारते पुनः समानमानवसंस्कृतियुक्तस्यैव समाजस्य सात्विकराजसवृत्त्योः विरोध आसीत् । एतादृग्वृत्तिभेदात्समुत्पद्यमानं युद्धं निमित्तीकृत्यैव उभयत्र महाकाव्यनिर्मितिः कृता विद्यते ।

अंगदसामप्रसंगं श्रीकृष्णसामप्रसंगं चावलोक्य यत्प्रतीयते तदेवम्—दुष्टानां दुष्टबुद्धिं सहजसरलमनोवृत्त्या विजित्य, शमयित्वाच तान्, समाज-

धारणं साधुपरित्राणपूर्वकं यथा स्यात्तथा प्रयतितवानङ्गदः । महाभारतकाले पुनः समाजव्यवस्थानियमा नीतिनियमाश्च विविधोपनियमैः अपवादसाहितैरपि सम्यग्विभक्ताः सुसम्बद्धा आसन् । अतश्च श्रीकृष्णसामप्रयत्ने असामान्यं किमपि बुद्धिचातुर्यं, वाग्वैभवं, बुद्धिवादः, पाण्डित्यं, राजकारणपटुत्वं च विराजतेतमाम् । राक्षसकृतदुष्कृत्यभाराक्रान्ता वसुधेति भृशमुद्वेजितो वाल्मीकिः कांचन भूतकालीनाम् आदर्शभूतां समाजव्यवस्थां मनसा संस्मरन् तामेव पुनः प्रतिष्ठापयितुं प्रयतमानो दृश्यते स्वकीयमहाकाव्यवर्णने । व्यासस्तु वर्तमान-समाजस्य विविधमनोवृत्तीः तत्तद्विषयप्रवणताश्च हृदि भावयित्वा, संवदतैव मनसा कांचन भविष्यत्कालीनाम् आदर्शभूतां समाजव्यवस्थां परिचिन्तयन् प्रस्तुतमहाकाव्यं वर्णयति ।

गते सुमहति काले, मन्ये वत्सरसहस्रादप्यनन्तरं कालिदाससविता उदयागिरिमागात् । तत्पूर्वमेव ' यावत्प्रतापनिधिराक्रमते न भानुरह्वाय तावदरुणेन तमो निरस्तम् ' इति न्यायेन सुसंघटिताऽऽसीज्जगतः प्रतिष्ठा । यस्यां परिस्थितौ कालिदासेन स्वजीवनं व्यतीतं, तामनुसृत्यैव प्रौढे वयसि स वाङ्मयसाहित्यमजनयत् । अतःपरम् अस्य साहित्ये दृश्यमाना ये ये गुणाः सन्ति, तेषां मध्यात्केचन कार्यकारणभावेन यथामति परामृश्यन्ते । प्रागेव तावद्विष्णुपुराणादिग्रन्थेषु वर्णितः जीवात्मपरमात्मनोः परस्परसम्बन्धः प्रियप्रियासम्बन्ध इवानन्यभक्तिकः सामान्यत्वेन दृढमूलतामलभत । समकालमत्र प्रकृतिपुरुषसंयोगजन्यं ईश्वरशक्तिसंयोगजन्यं वा जगदितिमूलकं तान्त्रिकं शैवमतमपि उच्छीर्षकमासीत् । किंबहुना, ईश्वरशक्तिसंयोगमूलकदेवसेनानीसमुद्भववर्णनपरं तत्कालीनकाव्यशिरोधार्यं काव्यरत्नमेकं कालिदास एव निर्मितवान् । ' जगतः पितरौ ' वन्दमानोऽयं यद्यपि शिवपूजकः प्रतिभाति तथापि ' मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते ' इति प्रतिपादयन् स वेदान्तीति नात्र संशयः । शिवोपासना चेयमस्य कुलपरंपरागतसंस्कारमूला वा स्यात्, तस्य सौन्दर्यैकलोपासनाफला वा स्यात् । यतो हि एतादृशानामुपासकानां तदेव दैवतम् । नीतिनियमा आचारनियमाश्च यद्यपि तत्समये कोष्टिकृता इव दृश्यन्ते तथापि तत्पालनं सर्वदा सर्वैः अनन्यगतिकत्वेन क्रियते स्म इति न मन्ये । स्त्रीपुरुषसम्बधिविचारेषु तु तत्कालीनाः सर्वेऽपि

कवयः पुरुषपक्षपातिनः इति तत्र तत्र दरीदृश्यते। यद्यपि नीतिमतः पुरुषान् कालिदासः प्रशंसति तथापि यथा अनीतिमतीः कुलांगना धिक्करोति न तथा अनीतिमतः पुरुषान्। स्वयमपि कठोरनीतिपालक इति राजधानीवास्तव्यस्य राजकुलविलासाभ्यस्तस्य च तस्य नाकलयितुं सुशकम्। उज्जयिनीं स्वजनुषा अलंकुर्वाणस्यास्य विविधशास्त्रेषु पारंगतत्वं पदे पदे प्रकटीभवति। देववाणीप्रभुत्वं चास्यैतादृशं यदनेनैव सा अलंकृता इति नेयमत्युक्तिः। अद्यापि 'न हि गीर्वाणवाणी व्यावहारिकसम्भाषणयोग्या' इत्येवमाक्षिपन्तः पण्डिता यदि खलु कविमूर्धन्यस्यास्य नाटकेषूपयुक्तां गीर्वाणभाषामभ्यस्येयुस्तर्हि आक्षेपोऽयं सिकताधारदुर्गवन्नश्येत्। 'आत्मा वाऽरे निदिध्यासितव्यः' ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना' इत्येतादृशीं विचारसरणिं परित्यज्य, 'आत्मा द्रष्टव्यः श्रोतव्यः' तस्मादिन्द्रियैः संवेद्याः इत्येवंविधं बभूव तत्वज्ञानं विदुषां तदानीन्तनानाम्। आनन्दो ब्रह्मेति ज्ञात्वा आकाशादिपञ्चभूतात्मकैरिन्द्रियैः स्वस्वविषयग्रहणं प्रीतिपुरःसरं कृतं चेत्, यो रसः समुत्पद्यते, तमेव रसं हि एव अयं लब्ध्वाऽऽनन्दी भवति। यदेष आकाश आनन्दो न स्यात्, को ह्येवान्यात्कः प्राण्यात्।' अतश्च यथा खल्विन्द्रियार्थान् प्रीतिपुरःसरमास्वादयेयुर्ययाच रसात्मकस्यानन्दस्य प्राप्तिः स्यात्तथा प्रयतितव्यमिति तैर्मतिरकारि। किमपि वस्तु कालिदासो गृण्हातु, तस्य शब्दस्पर्शरूपरसगन्धान् स भावनापरिप्लुतप्रेम्णा, सुसूक्ष्मावलोकनेनैकामपि कलामपरित्यज्य हार्दिकानन्दातिशयेन कुत्रचिद्दुःखातिशयेन वा एवं वर्णयति यदस्मिन् न कोऽप्यन्यः कविरद्यापि तस्य तुलामर्हति। 'उपमा कालिदासस्य,' 'अनामिका सार्थवती बभूव' 'कविताकामिन्याः कालिदासो विलासः' इत्येवंविधानि सुभाषितानि सार्थान्येव सन्ति गुणसागरस्तु कालिदासस्य अपारः खलु। अतश्च स्वल्पप्रज्ञोडुपेन तितीर्षा निष्फलैव। तथापि विविधशास्त्रमानसराजहंसेभ्यः पण्डितेभ्यः कानिचिन्मुक्ताफलान्युपायनीकृतानीति शम्।

---

# श्रीकालिदासीये काव्यदोषाः

[ लेखकः—काव्यालंकारभूषणः संस्कृतसाहित्यविनोदरत्नाकरश्च
पं. शिवरामशास्त्री शिन्त्रे, पो. लोणावळा, जि. पुणे. ]

श्रीकालिदासस्य काव्ये परःशता गुणाः सन्ति तान्वयमनुकुर्मः परन्त्वस्मिन्निबन्धे तदीयकाव्यदोषाणां वर्णनस्यापि प्रयोजनमस्ति । प्रायः परतन्त्रप्रज्ञा जना महाकवीनां कृतिषु सदोषान्प्रयोगानवलोक्यताननुकर्तुं प्रयतन्ते । परिणामे च दुष्टवाङ्मयप्रचयो भवति । तस्मान्मन्दमध्यप्रज्ञा आधुनिकाः कवयो महाकवित्वादरेण प्राचीनकविकृतिस्थानां सदोषपद्यानामनुकरणं मा कार्षुरिति मनसिकृत्य कतिपयानां कालिदासीयकाव्यदोषाणामत्र दिग्दर्शनं क्रियते । तदीयगुणानुकरणं तु समीचीनमेव सर्वेषाम् ।

प्रथमं तावद् व्याकरणविरुद्धतैव कालिदासीया वर्ण्यते । असौ हि च्युतसंस्कृत्यपरपर्यायो महान्काव्यदोषोऽस्ति । तथाहि । ' तेनाभिघातरभसस्य विकृष्य पत्री वन्यस्य नेत्रविवरे महिषस्य मुक्तः । निर्भिद्य विग्रहमशोणितलिप्तपुङ्खस्तं पातयांप्रथममास पपात पश्चात् ' ॥ ( रघुवंशे ९।६१ ) तथाच ' भ्रूभेदमात्रेण पदान्मघोनः प्रभ्रंशयां यो नहुषं चकार ' । ( रघुवंशे १३।३६ ) अनयोः स्थलयोः श्रीकालिदासः पातयां प्रथममास, प्रभ्रंशयां यो नहुषं चकार, इति चापाणिनीयं पदं प्रायुङ्क्त । ' कृञ्चानुप्रयुज्यते लिटि ' इति पाणिनिसूत्रेऽनुशब्दो विपर्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थं चास्ति । आमन्ताद् व्यवधानरहितानामेव लिट्परककृभ्वस्तीनां प्रयोगाः पाणिनिसम्मताः । पूर्वस्थलयोः पदान्तरव्यवधानं वर्तते । तस्मात्च्युतसंस्कृतिर्नाम दोषः । निरङ्कुशाः कवयः इतिवचनमपि वृत्तवर्ण्यरसादिविषयकमेव स्वातन्त्र्यं कवये प्रयच्छति । न तेन सदोषरचनादाववकाशः । तथा सति सर्वत्रानियमप्रवृत्त्या शास्त्रवैयर्थ्यापातः ।

अथ द्वितीयो दोषः । ' तद्गच्छ सिद्ध्यै कुरु देवकार्यम् ' ( कुमारसंभवे ३।१८ ) अस्मिंश्चरणे द्ध्यै इत्यक्षरं श्रुतिकटुत्वदोषेण युक्तं वदन्ति ।

अथ तृतीयः कालिदासीयदोष उदाह्रियते । ' यश्चाप्सरोविभ्रममण्डनानां संपादयित्रीं शिखरैर्बिभर्ति । बलाहकच्छेदविभक्तरागामकालसंध्यामिव धातुमत्ताम् ' ( कुमारसंभवे १।४ ) अस्मिन्पद्ये मत्ताशब्दांशः क्षीबेत्यन्यार्थवाचकत्वान्निहतार्थः । तेन हि धातुमत्त्वरूपो विवक्षितोऽर्थो निहन्यते । तस्मान्निहतार्थता दोषः । इष्टार्थप्रतीतिव्यवधानकरत्वं तथा रसापकर्षकत्वमेव हि काव्यदोषत्वम् ।

अथ चतुर्थं दोषस्थलम् । " त्वयि निबद्धरतेः प्रियवादिनः प्रणयभङ्गपराङ्मुखचेतसः । कमपराधलवं मयि पश्यसि त्यजसि मानिनि ' दासजनं यतः ' ॥ विक्रमोर्वशीयनाटके चतुर्थेऽङ्के, पुरूरवस उर्वशीं प्रतीयमुक्तिः । अत्र, अपराधलवमपीत्यर्थो विवक्षितः, स न गम्यते । तस्मादपिपदस्य नैयून्यान्न्यूनपदता नाम दोषः । अत्रैव पद्ये पञ्चमोऽनभिहितवाच्यतादोषोऽप्यस्ति । अपिशब्दसद्भावे तु न दोषलेशोऽपि । अथ षष्ठं दोषस्थलम् । रघुवंशपञ्चमसर्गे द्वात्रिंशः श्लोक इत्थम् । अथोष्ट्रवामीशतवाहितार्थं प्रजेश्वरं प्रीतमना महर्षिः । स्पृशन्करेणानतपूर्वकायं संप्रस्थितो वाचमुवाच कौत्सः ॥ " अत्र ' ब्रूञ् व्यक्तायां वाचि ' इति पाणिनिस्मरणाद् उवाचेत्यनेनैवार्थप्रतीतेर्वाचमिति पदं निष्फलम् । तस्मादधिकपदं नाम दोषः । वाचमित्यस्य मधुरमित्यादिविशेषणदाने त्वदोषः । अथ सप्तमो दोषः । ' ते हिमालयमामन्त्र्य पुनः प्राप्य च शूलिनम् । सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाख मुद्ययुः ॥ ' ( कुमा १०६।९४ ) अस्मिन्पद्ये, अस्मै निवेद्येति प्रक्रमस्य, इदं विसृष्टा इत्युपसंहारो युक्तः तदभावेन भग्नप्रक्रमो नाम दोषः ' सिद्धं तस्मै इति पाठे तूद्देश्य प्रतिनिर्देश्ययोरैक्यप्रतीतेर्नायं दोषः । ' गाहन्ता महिषा० ' इत्यादौ शाकुन्तलश्लोके तृतीयपद्येऽकस्मात्कर्मणि प्रयोगरचनादयमेव दोषोऽस्ति ।

अथाष्टमनवमौ दोषौ । ' द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः । कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥ ' ( कुमारसं० ५।७१ ) अत्र कलाचवत् त्वंचेति पदक्रमो योग्यः । तदभावाद् अक्रमो नाम दोषः उक्तं हि नित्यं प्राक्पदसंबद्धाश्चादयः प्राक्प-

दान्तवत् ' । इति । अस्मिन्नेव पद्ये पिनाकिनः इति पदं शौर्यद्योतकत्वेन शौच्यतारूपप्रकृतार्थविरुद्धमस्तीति **प्रकृतविरुद्धता**दोषोऽप्यस्ति ।

अतो दशमं दोषोदाहरणम् । "राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी । गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा "॥( रघुवंशे ११।२० ) अत्र बीभत्सशृङ्गारयोरेकाश्रयत्वाविरोधात्, **असंमतपरार्थो** नाम दोषः ।

अथैकादशो दोषः । कुमारसंभवस्य चतुर्थसर्गे करुणस्य विक्रमोर्वशीयचतुर्थेऽङ्के विप्रलम्भशृङ्गारस्य च वारंवारं वर्णनात्**पौनःपुन्यरसदीपनं** नाम दोषः सहृदयवैरस्यावहः । अथ द्वादशं दोषस्थलम् । ' स्रस्तां नितम्बादवरोपयन्ती पुनः पुनः केसरदामकाञ्चीम् । न्यासीकृता स्थानविदा स्मरेण द्वितीयमौर्वीमिव कार्मुकस्य ॥ ( कुमार० ३।५५ ) अत्र द्वितीयां मौर्वीम् इति पठनं युक्तम् । द्वितीयापदस्य कर्मधारये गुणीभावेन, **अविमृष्टविधेयं** नाम दोषः ।

अथ त्रयोदशो महान्दोषः । कुमारसंभवेऽष्टमादिसर्गेषु शिवभक्तोऽपि कालिदासो गौरीहरयोः संभोगवर्णनं प्राकृतपुरुषवदकरोत् । दिव्यपुरुषविषये तन्न युक्तं पित्रोः संभोगवर्णनमिवानुचितं च । तस्मात्**प्रकृतिविपर्ययो** नाम दोषः । दुष्यन्तवत्सराजादिषु काल्पनिकपुरुषेषु चानन्देषु संभोगवर्णनाय सत्सु देवता संभोगवर्णनेनैव भक्ततोदकेन किं फलम् । अस्तु । संक्षिप्तेऽस्मिंल्लेखे परिस्फुटा एव कालिदासीयदोषाः परिहारार्थमेव वर्णिता न पुरोभागितयेति मन्तव्यम् । अन्येऽपि कालिदासस्येतरेषां च काव्यदोषाः शास्त्रदृष्ट्यालोच्य परिहर्तव्याः कविभिरिति शिवम् ।

---

# किमपि कालिदासीयम् ।

( पं. पुरुषोत्तमशास्त्री रानडे आनंदाश्रम पुणें २ )

अयि सहृदया मनीषिमचर्चिका मधुरवाणीसुहृदः ! केचन पुरोभागिनो विद्वांसः कविकुलमूर्धन्यं लोकंपृणयशसं कालिदासं 'तदीयकाव्येषु क्वचिदुत्सूत्रप्रयोगा नयनयुगलपथमवतरन्ति' इति साटोपमाक्षिपन्ति । हन्त भोः सर्वथा हता खलु रसिकता । केलिवनं प्रविश्य कण्टकजालमेवान्वेषयतः क्रमेलकस्यैव पदवीमनुसरन्ति ते आक्षेपका इति नो मतिः । न खलु न वयं लेशतोऽपि दोषः कालिदासीयकलाविलासे चक्षुर्गोचरीभवेदिति कामयामहे प्रतिपादयितुम् । परं कविकदम्बकुलपतेरस्य प्रतिग्रन्थं प्रतिपद्यं किं भूयसा प्रत्यक्षरमपि प्रविकिरन्निव सान्द्र सुधारसासारमतिभूमिं गतो मधुरिमा, निरुपमं पदलालित्य, सहृदयहृदयस्पर्शी पाकः, हृदयंगमा शैली, मनोहारिणी शय्या, वाचकजनचेतःकासारे प्रमोदबुद्बुदानुत्पादयन्ती वैदर्भी नाम रीतिः, कोऽपि लोकातिशायी प्रसादः, विमर्शं विमर्शं प्रयुक्तः पदगुम्फः एवमादयो गुणा विलसन्ति तत्र दृग्दोषनिवारणार्थं वरकपोले विधीयमानः कज्जलाङ्क इव क्वचिद्दृश्यमानो दोषः काव्यश्रियं सविशेषं परिपुष्णात्येवेति संभावयितुं युक्तं न पुनर्दोषैकदृष्टयाऽवलोकयितुम् । एवं सति तद्विहाय केषांचन मितंपचमतीनां विदुषां वृथैव कोऽयं डिण्डिमघोषो यत्, उत्सूत्रप्रयोगः कालिदास इति ।

गुणैकपक्षपातिनो रसिकवरेण्याः ! हन्त ! आकल्पमपि जल्पन्त्वनल्पं जल्पाकाः कालिदासविषये किमपि, परं यदीयकाव्यामृतरसनिस्यन्दलोलुपः कोऽपि रसिको नवविलासिनीसमालिङ्गिततनुरपि तामुज्झित्वाऽदसीयामादौ काव्यसुधामेव रसयेत्तस्यैतादृग्दोषोद्घाटनेन का क्षतिर्वाग्देवीकण्ठमणेः कालिदासस्य । अथापि 'तुष्यतु' न्यायेन के त उत्सूत्रप्रयोगाः, कति च ते, क्व च ते, कीदृशश्च ते, परमार्थतस्ते आहोस्विदाभासरूपास्ते, शास्त्रीयव्युत्पत्त्या

समर्थनीयाश्च त उताहो एकान्ततः कयाऽपि रीत्याऽसमर्थनीयाः । एतद्विषये मनागिव विमृशामः । तत्राऽऽदौ ग्रन्थ-स्थल-संख्यादिकं व्यक्तीक्रियते ।

[१] 'तं पातयां प्रथममास पपात पश्चात्' (र. स.९-६१) 'प्रभ्रंशयां यो नहुषं चकार' (र. स. १३-३६) 'संयोजयां विधिवदास समेतबन्धुः' (र. स. १६-८६) स्थलत्रयेऽस्मिन् आमो व्यवहितः कृञः प्रयोग उत्सूत्रः । निर्दिष्टानां त्रयाणामपि स्थलानां तुल्यविषयतयैकैव संख्या कल्पिता ।

[२] 'श्रेयांसि सर्वाण्यधिजग्मुषस्ते' (र. स. ५-३४) 'तं तस्थिवांसं नगरोपकण्ठे' (र. स. ५-६१) अत्र छन्दसि क्वसुकानचोर्विधानात्, भाषायां क्वस्वन्तः प्रयोग उत्सूत्रः । प्रागिव प्रयोगद्वयस्य समानधर्मत्वादेक एव क्रमाङ्को निर्दिष्टः ।

[३] 'तपोवनेषु स्पृहयालुरेव' (र. स. १४-४५) अत्र चतुर्थी युक्ता नतु सप्तमी ।

[४] 'शेषाङ्गनिर्माणविधौ विधातुर्लावण्य उत्पाद्य इवाऽऽस यत्नः' (कुमा. सं. स. १-३५) अत्र बभूवेति न्याय्यम् । आर्धधातुकविषये 'अस्तेर्भूः' इति विधानात 'आस' इति प्रयोग उत्सूत्रः ।

[५] 'त्रियम्बकं संयमिनं ददर्श' (कु. सं. स. ३-४४) अत्र त्र्यम्बकमिति पाणिनिसंमतम् ।

[६] 'दूरयत्यवनते विवस्वति' (कु. सं. ८-३१) अत्र दवयतीति सांप्रतम् ।

[७] 'शार्वरस्य तमसो निषिद्धये' (कु. सं. स. ८-५८) अत्र शार्वरिकस्येति योग्यम् ।

[८] '**नीचैराख्यं गिरिमधिवसेस्तत्र विश्रामहेतोः**' ( पूर्वमे. दू. २५ ) अत्र विश्रम इति युक्तं विश्राम इति तु अपाणिनीयम् । 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' ( पा. सू. ७।३।३४ ) इति वृद्धिनिषेधात् ।

[९] '**तत्रागारं धनपतिगृहादुत्तरेणास्मदीयम्**' ( उ. मे. दू. १२ ) अत्र धनपतिगृहान् इति द्वितीया शब्दशास्त्रसंमता ।

[१०] '**कृताभिमर्षामनुमन्यमानो मुष्टं प्रतिग्राहयता विमान्यः**' ( शाकुन्तले ५-२० ) अत्र मुषितमिति साधु । मुषधातोः सेट्कत्वात् ।

[११] '**कथं कः क इत्याह । मा तावत् । न खलु विदितोऽहमस्य ।**' विक्रमोर्वशीये चतुर्थाङ्केऽष्टादशपद्यस्याग्रिमा पङ्क्तिः । अत्र कथं कस्क इत्याह । ' इति शब्दशास्त्रीयम् ।

[१२] '**प्रसरति सुभ्रु ततः कृती भवेयम् ।**' ( वि. उ. ३-२२ ) अत्र सुभ्रूः इति युक्तम् । कुमारसंभवेऽपि 'विमानना सुभ्रु कुतः पितुर्गृहे' ( स. ५-४३ )

[१३] विदूषकः—'**भवति मा बिभेहि । अतिक्रान्तं खलु भगवती** कथयति । ' ( माल. अ. ५-१० इत्यस्याग्रे । )

प्रियसुहृदः ! कालिदासीयषड्ग्रन्थ्या आमूलचूडाग्रं सूक्ष्मेक्षिकया परिशीलने कृते शक्यसंभवा उत्सूत्रप्रयोगा ये हि मामकीनमतिगोचरा अभूवन् , ते खलूपरि निर्दिष्टाः । कालिदासमुत्सूत्रप्रयोगविषय आक्षिपतां विदुषामेते एव प्रयोगा अन्ये वा तन्न जानीमः । नाद्राक्ष्म खलु साकल्येन तैर्विहितं तत्परिगणनमद्य यावत् , येन तानियत्तयेदंतया चावगन्तुं शक्नुयाम । उपरिनिर्दिष्टेभ्योऽन्येऽपि कतिचनोपर्युपरिभासमानाश्च्युतसंस्कारप्रयोगा दृश्येरन् परं नतरां ते परिगणनार्हा इति न वयं तत्रावादश्राम न वोपरितनपरिकलने उदलिखाम । सद-

सद्विमर्शपटीयांसो विद्वांसः ! पाणिनीयशास्त्रमात्रदृशा निपुणं निभालितं चेत् प्राङ्-निर्दिष्टाः प्रयोगाश्च्युतसंस्कारा इति गले पतति । नेति को नु ब्रूयात् । प्रत्युत सकलवसुंधराभोगजेगीयमानयशःप्रकाण्डः कालिदासः पाणिनीयशब्दशास्त्रं नाज्ञासीदिति मनस्यप्यानेतुं न धृष्णुमः खलु वयम् । यतो यो हि कालिदास आमः कृञो व्यवहितमनुप्रयोगं 'तं पातयां प्रथममास' इत्यादिषु स्थलेषु व्यधात् स एव कालिदासोऽन्यत्र 'लीलारविन्दं भ्रमयांचकार' (र. वं. ६-१३) 'व्यापारयामास करं किरीटे' र. व. ६-१९ ) 'विपाटयामास युवा नखाग्रैः' ( र. वं. ६-१७ ) इत्यादिषु स्थलेषु आमोऽव्यवहितं कृञोऽनुप्रयोगं कुर्वन् पाणिनीयशब्दशास्त्रानभिज्ञ इति कथंकारं व्याहर्तव्यम् । अपि च 'विश्रामहेतोः' इत्यत्र नोदात्तेति वृद्धिनिषेधमनाकलयन् 'त्रियम्बकम् ) इत्यत्र यणमविगणय्य यो हि कालिदासः स एव कालिदासः 'पश्चात्पुत्रैरपहृतभरः कल्पते विश्रमाय' ( विक्रमोर्वशीये ३-१ ) इत्यत्र वृद्धिम् 'महेश्वरस्त्र्यम्बक एव नापरः' ( र. वं. ३-४९ ) इत्यत्रेयङं च सुदूरमुत्सार्य पाणिनिसंमतं वृद्धिनिषेधं यणं चाङ्गीकरोति स्म । दिगियं दर्शिता । एवं सर्वत्रापीत्यवगन्तव्यम् । अनेनेत्थं विशदीभवति यत्, कालिदासः पाणिनीयतन्त्रे परिनिष्ठितप्रज्ञ एवाऽऽसीत् । न खलु वस्तुन्यस्मिन् संदेहबिन्दोरप्यवसरः । तर्हि निर्दिष्टप्रयोगाणां का गतिः ? विमृशामस्तावत् ।

मतिमत्तमाः सखायः ! विदांकुर्वन्तु श्रीमन्तः प्रथमं चैतद्यत् सर्वेऽप्युपरिनिर्दिष्टाः प्रयोगा न खलु उत्सूत्राः किंतु संभवद्गतिका एव । तेषु कतिचन व्याकरणान्तरावलम्बिनः, कतिपयेऽन्ययैव रीत्या सिध्यन्तः, केचन वा तत्कालौचित्या किमप्यपूर्वं रचनाचातुर्यं प्रचिकटिषया मतिपुरःसरमेव प्रयुक्ताः सन्ति । यथा चैतत्तथा स्फुटीक्रियते—

विद्वांसः ! प्रथमं तावदिदं चेतसि करणीयं यत्, कालिदासकाले पाणिनीतरवैयाकरणानां चान्द्रशाकटायनादीनां व्याकरणानां पारम्पर्यागताः शब्दसंस्कारा नतरां सर्वथा व्यलुम्पन् । तेषां छटास्तु विदुषां कविप्रवराणां

च स्मृतिपथ आसन्नेव। नानाव्याकरणज्ञत्वं नैककोशपरिचयवत्त्वमित्यादयो विषयाः कविवराणामार्हन्तीमेव परिपुष्णन्ति! अत एव (१) 'तं पातयाम्' 'प्रभंशयां यः' 'संयोजयाम्' एते प्रयोगाः पाणिनीयव्याकृतिविरुद्धा अपि मुग्धबोधस्थितेन 'म्वस्क्रन्वामः' इति सूत्रेण सिध्यन्ति। नो चेत्कवितल्लजोऽयं कालिदासो णिजन्ताल्लिटि कृञोऽनुप्रयोगं व्यवहितमेव कथंकारं प्रयुञ्जीत। तस्माद्व्याकरणान्तरेण तत्सिद्धिसंभवादेतादृशानां प्रयोगाणामुत्सूत्रात्वमिति न प्रलपनीयम्। (२) 'तं तस्थिवांसं नगरोपकण्ठे' 'श्रेयांसि सर्वाण्यधिजग्मुषस्ते' इत्यादयः प्रयोगा अपि नहि च्युतसंस्काराः। तथा हि—क्वसुकानचोः कित्वेन तादृशप्रयोगाणां लौकिकत्वं संभवति। 'छन्दस्युभयथा' ( पा. सू. ३।४।११७ ) इति वचनेन क्वसुकानचोः सार्वधातुकत्वेन 'सार्वधातुकमपित्' ( पा. सू. १।२।४ ) इति ङित्वादेव 'आजिवान्' इत्यादौ नलोपादीनां कित्कार्याणामन्यथासिद्धया 'तितीर्वान्' 'तिस्तिराणः' इत्यादौ 'ऋच्छत्यृताम्' ( पा. सू. ७।४।११ ) इति गुणबाधनार्थं कित्करणमिति सिद्धान्तितम्। अत एव कित्करणसामर्थ्यात् क्वसुकानचौ भाषायामपि सिद्ध्यत इति गतानुगतिकतया सिद्धस्य गतिश्चिन्तनीयेति समाधेयम्। 'उपेयिवाननाश्वाननूचानश्च' (पा. सू. ३।२।१०९ ) इत्यत्रत्येन चशब्देन निपातितेतरशब्दानां क्वचिद्ग्रहणेऽपि वा कथमपि मानमुन्नेयम्। [३] 'तपोवनेषु स्पृहयालुरेव' इत्यत्र 'स्पृहेरीप्सितः' [पा. सू. १।४।३६] इति सूत्रेणेष्टस्य संप्रदानतया चतुर्थी न्याय्या। न च छन्दोर्थं सा सप्तमी विहितेति वाच्यम्। 'तपोवनेभ्यः स्पृहयालुरेव' इत्युक्तेऽपि छन्दोभङ्गदोषाभावात्। एवंत्वेऽपि संप्रदानत्वस्याविवक्षयाऽधिकरणत्वविवक्षया च सप्तम्यपि न तरां महीयसे दोषायेति विदांकुर्वन्तु विपश्चिदपश्चिमाः। [४] 'लावण्य उत्पाद्य इवाऽऽस यत्नः'। अत्र 'बभूव' इति युक्तम्। परं 'असगतिर्दीप्त्यादानेष्विति धातोर्लिटि रूपम्। इति म. म. मल्लिनाथः स्वटीकायां वामनास्त्वित्यादिना ग्रन्थेनोदलिखत्। तस्मान्न तत्रापि च्युतसंस्कारत्वशङ्कापङ्कः। [५] 'त्रियम्बकं संयमिनं ददर्श' इत्यत्र यद्यपि

'त्र्यम्बकमिति सांप्रतं तथाऽपि 'तन्वादीनां छन्दसि बहुलम्' इतिवार्तिकस्थितेन 'क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेवेत्यर्थकेन बहुलपदेन क्वचिद्भाषायामपि 'यणं' बाधित्वा 'इयङ्' इति समाधातव्यम्। [६] 'दूरयत्यवनते विवस्वति' इत्यत्रापि कालिदासस्याशाब्दिकत्वमिति नभ्रमितव्यम्। दूरमतति अयते वा दूरात्। दूरातं कुर्वति इत्यर्थः। इति वैयाकरणधौरेयैर्भट्टोजीदीक्षितैरेव कृतं समर्थनं जागर्तितरामेव सिद्धान्तकौमुद्याम्। [७] 'शार्वरस्य तमसो निषिद्धये' इत्यत्रापि शर्वर्यां भवः इतिकालाङ्गमाविवक्षयित्वा शर्वर्या इदमिति सामान्यविवक्षया 'तस्येदम्' इत्यणपि शक्यसंभवः। अत्रेदमित्यनेन शेषभूतसर्वविशेषाणां सामान्यविशेषरूपेण प्रत्ययार्थत्वं बोध्यम्। अतोऽत्रापि कविप्रकाण्डस्य नोत्सूत्रप्रयोगत्वम्। [८] 'तत्र विश्रामहेतोः' अत्रापि 'विश्रामो वा' इति चान्द्रव्याकरणस्थवचनेन वैकल्पिकवृद्ध्या सिध्यति नूनं विश्राम इत्यपि रूपम्। अत एव चतुरचेतसो भट्टोजीदीक्षितमहोदया विश्राम इति अपाणिनीयमिति प्रत्यपीपदन् नतूत्सूत्रमिति प्रतिपादितवन्तः। अपाणिनीयमितिपदस्याऽऽकूतं जानीयुरेव मर्मज्ञाः सुधियः। (९) 'तत्रागारं धनपतिगृहादुत्तरेणास्मदीयम्' अत्र 'एनपा द्वितीया' (पा. सू. २।३।३१) इति सूत्रेण 'धनपतिगृहान्' इति द्वितीया भवितुं युक्ता। दृश्यते च द्वितीयाऽपि क्वचित् प्राचीनलिखितपुस्तकेषु। तदा न संदेहबिन्दुरपि। गृहादुत्तरेण तु पञ्चम्यन्तपाठे तु उत्तरेणेति न एनप्प्रत्ययान्तं तोरणेनेत्यस्य विशेषणमिति म. म. मल्लिनाथ एव संजीविन्यां समर्थयामास, श्रीज्ञानेन्द्रसरस्वतीस्वामिप्रवरश्च तत्त्वबोधिन्यां समदीधपत्। उत्तरेण तोरणेन लक्षितमित्यर्थः। 'लताप्रतानोद्ग्रथितैः स केशैः' (र. वं. २।८) इतिवत् 'इत्थंभूतलक्षणे' (पा. सू. २।३।२१) तृतीया (१०) अत्र मुषितमिति पाणिनीयम्। परमागमशास्त्रस्यानित्यत्वात् 'सागरं तर्तुकामस्य' 'क्षुब्धो राजा' अपि शाकं पचानस्य' 'जप्त्वा' इत्यादिप्रयोगवन्मुष्टमित्यपि नोत्सूत्रम्। (११) 'कथं कः क इत्याह' इत्यत्र 'कस्कादिषु च' (पा. सू. ८।३।४८) इत्यनेन 'कथं कस्क इत्याह' इत्यावश्यकम्। सत्यम्। संहिताया अविवक्षयाऽत्र संधेरभाव एव विवक्षितः। तेन न किमपि विघटेत। दृश्यन्ते चैवंविधाः प्रयोगा बहुत्र। यथा- वेण्याम् 'कः कोऽत्र भोः?

जैत्रं मे रथमुपकल्पय तावत्' । (वे. सं. २।२८ अग्रिमा पङ्क्तिः) काव्यप्रकाशे सप्तमोल्लासे पतत्प्रकर्षोदाहरणं च 'कः कः कुत्र न घुर्घुरायित-घुरीघोरो घुरेत्सूकरः । कः कः कं कमलाकरम्०' इ. इ. (१२) प्रसरति 'सुभ्रु' ततः कृती भवेयम्' अत्र भ्रूशब्दस्य उवङ्स्थानीयत्वात् 'नेयङ्-वङ्स्थानावस्त्री' (पा. सू. १।४।४) इति नदीसंज्ञाप्रतिषेधात् 'अम्बार्थ-नद्योर्ह्रस्वः' (पा. सू. ७।३।१०७) इति ह्रस्वत्वं नास्ति । अतो ह्रस्वः प्रामादिक इति केषांचन मतम् । युक्तमिदमुच्यते । नेति को ब्रूयात् । रसिकोत्तमाः प्रियसुहृदः ! निभालयत सूक्ष्मेक्षिकया यत्, उर्वशीसमागमसुधारस-पारावारनिमग्नस्य राज्ञ उक्तिरियम् । एतादृशेऽविदितवेद्यान्तरेऽवसरे को नु नाम 'सुभ्रु' इति शुद्धं भवति 'सुभ्रूः' वेति जानीयात् । एवंविधे प्रसङ्गे दोषा एव गुणायन्ते तस्मादत्र समयानुगुण्येन 'सुभ्रु' इत्युत्सूत्रमेव पदं कविवरेण्यस्य कामपि काव्यकलां विशिष्य परिपुष्णाति । इत्यलं विदितवेदि-तव्येषु विद्वत्सु । 'कासि हे सुभ्रु' इतिभट्टिकाव्यस्थं 'सुभ्रु' पदं प्रस्तुत्य 'विरहपीडितत्वेन अनवधानलक्षणोऽत्र प्रमादः । स च विरहपोषकत्वात् काव्ये गुणः' इति प्रतिपादयन् शाब्दिकसार्वभौमः शेखरकृदप्यत्रानुकूलः । एतेन 'विमानना सुभ्रु कुतः पितुर्गृहे' इति कुमारसंभवस्थः 'सुभ्रु' शब्दोऽपि समर्थितः । (१३) 'भवति मा बिभेहि' अत्र 'बिभिहि' 'बिभीहि इति वा भवितुं युक्तम् । बिभेहि इति गुणघटितं रूपं च्युतसंस्कार-मिति दुष्टिबीजम् । अत्रोच्यते— प्रथमं तावत् सुधीभिरेतन्न विस्मर्तव्यं यदेत-द्विदूषकभाषणमिति । विदूषयति आत्मानमिति विदूषकः इति विदूषकशब्द-निर्वचनम् । विदूषकशब्दश्रवणसमनन्तरमेव अङ्गादिविकारैः (आदिशब्देन भाषाविकारैः) हास्यरसोत्पादको नाटकीयपात्रान्तर्गतः, परमार्थतः सुज्ञोऽप्यात्मानमज्ञं भावयन् पात्रविशेषः । इति कस्यापि चेतसि समायाति । यथा—

आनीय नीरजमुखीं शयनीपकण्ठ-
मुत्कण्ठितोऽस्मि कुचकञ्चुकमोचनाय ।
अत्रान्तरे मुहुरकारि विदूषकेण
प्रातस्तनस्तरुणकुक्कुटकण्ठनादः ॥

अहो पार्श्वोपपीडं हासं प्रजनयन् यस्य विकृतवाग्विलासस्तस्य विदूषकस्य भाषणविषये किं साध्वसाधुमीमांसया। अत्र केचन धीमन्तः खल्वेवमपि संभावयेयुर्यत्, गुणानर्हेऽपि 'हि' प्रत्यये परे सति इगन्ताङ्गस्य गुणं विदधानः कालिदासः 'विदूषकमुखे' क्वचिदेतादृगुत्सूत्रप्रयोग एव शोभादायको गुणः' इति ध्वनयति स्म किमु ? इति। विद्वांसः ! न खलु न जानीमो यत्प्रागुक्तसमर्थनेषु कानिचित् कुशकाशावलम्बनायितानि इति यथा तथा वा भवतु कविकुलगुरुकालिदासविषयकः प्रेमातिशय एव नो वस्तुन्यस्मिन्प्रावीवृतत्, इति विभाव्य, कथं संतुष्येयुः कृतमतय इति महायान् विश्वासः। इतिशम्।

---

# "कालिदासे विशेषाः"

लें. दामले कुलभवो हरिः
संस्कृत पाठशाला रत्नागिरिः

श्रीकालिदासप्रतिभाप्रकाशं। काव्याम्बुजानां रसिकालिदासम्। राकालिदासंनिभकाव्यहासम् भक्त्यार्चये पंडितकालिदासम् ॥१॥ अयि विबुधाः प्रमोमुदीति स्वान्तं मे मधुरवाण्याः कालिदासविशिष्टांकनिर्माणकल्पनया। सरसमधुरवाण्या एवायमधिकारः सरससरलमधुरकाव्यनिर्माणकुशलस्य कालिदासस्य स्मरणार्थं प्रकाशनीयः कोऽपि विशिष्टांक इति। शतशः सहस्रशश्च धन्यवादार्हाः पंडितकुलावतंसाः संपादकमहाभागाः। भगवतः कालिदासस्य स्मरणमहोत्सवे पामरेण मयापि कथमपि प्राप्यो भागः इति निश्चित्य कालिदासकौतुकवशात् अधिकाराभावेऽपि लिखितुं किमपि निश्चितवानहम्। वहति गंगाप्रवाहे गच्छता केनापि निर्वर्त्यंत एव हस्तप्रक्षालनम्। नाधिकारं कालं वा अपेक्षते। अत एवाहं कालिदासे विशेषाः सन्तीति पश्यन् यथाशक्ति तान्दर्शयितुं लिखामि लेखम्। बुधाः! अनधिकारिणो मे निशम्य वाचम् मा क्रोधं कुरुत। सहत सौहार्दात् इति प्रार्थना।

कविकुलमणेः कालिदासस्य विशेषाः सर्वत्र दरीदृश्यन्त एव तथापि लेखेऽस्मिन् वैशिष्ट्यप्रदर्शनार्थं कुमारसंभवं महाकाव्यं गृह्यते । परमरमणीयेऽस्मिन्महाकाव्ये सन्ति सप्तदश सर्गाः । श्लोकाश्च चतुर्भिरूनं सहस्रम् । रघुवंशकुमारसंभवमहाकाव्ये निर्माय कालिदासो महाकवित्वमाप । महाकाव्यस्य हि कर्ता महाकविः । ननु महाकविना कृतं किमपि काव्यं महाकाव्यत्वमर्हति । तदुक्तं अग्निपुराणे.................. तत्कर्ता महाकविः । अतः सुनिश्चितमिदं यत् यं विधाय कविः कालिदासः महाकवित्वमाप तदिदमस्ति कुमारसंभवं नाम महाकाव्यम् ।

कालिदासो नैकः। सन्ति त्रयः कालिदासाः । परंतु मधुरवाणीविशिष्टां-काभीप्सितः कालिदासानामनेकत्त्वेऽपि रघुवंशकुमारसंभवयोः कर्ता एक एवेति न संशयः । अतः एकः कालिदासः त्रयो वा इत्यत्र नास्माकं आग्रहः । सुविख्यातस्य महाकवेः कालिदासस्य कुमारसंभवं महाकाव्यं दृष्ट्वा के विशेषा दरीदृश्यन्ते तत्प्रदर्शनमुद्देशोऽस्य लेखस्य ।

तत्र प्रथमतः कुमारसंभवं काव्यं महाकाव्यपदवीमर्हति न वेति किंचित् प्रस्तूयते । महाकाव्यलक्षणविषये—

विशेषतः अग्निपुराणे विचारो दरीदृश्यते सच यथाः—

यस्मिन्हि सर्गैः क्रियते रचना । सर्गाश्च प्रत्येकं भिन्नभिन्नवृत्ताः तथाच यस्य यस्य सर्गस्य यद्यदस्ति वृत्तं तत्तोन्यवृत्तस्य सर्गस्यान्तिमः श्लोको भाव्यः तथा चैवं —

इतिहासकथोद्भूतं इतरद्वा सदाश्रयम् ।
मंत्रदूतप्रयाणाजिनियतं नातिविस्तरम् ॥
नगरार्णव शैलर्तु चंद्रार्काश्रमपादपैः ।
उद्यानसलिलक्रीडा मधुपानरतोत्सवैः ।
सर्ववृत्तिप्रवृत्तं च सर्वभाव प्रभावितम् ॥
सर्वरीतिरसैः पुष्टं पुष्टं गुणविशेषणैः ।
एवमास्ति महाकाव्यं तत्कर्ता च महाकविः ॥

वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम् । स्पष्टमेवाभिहितमत्र अग्निपुराणे महाकाव्यलक्षणम् । कुमारसंभवे यदि क्रियते लक्षणसमन्वयस्तर्हि नैकस्यापि लक्षणस्यास्य अव्याप्तिरतिव्याप्तिरसंभवो वा स्यादिति निःशंकं वक्तव्यम् ।

कुमारसंभवस्य तु सरसं कथावस्तु पुराणप्रसिद्धत्वात् इतिहासत्वेऽन्तर्भवति । असुरपीडिताः सुरा मंत्रं चक्रुः । दौत्यं चाश्रित्य भवगन्तं शिवमुपजग्मुः । इति काव्ये वर्णितम् । मधुरतरं हिमालयवर्णनं । सुंदरं ऋतुवर्णनम् । शान्तं सुखदंच शिवस्य आश्रमस्य वर्णनम् । पताकादिवर्णनपुरःसरं हिमाधिपतिनगरीवर्णनम् भगवतः शंकरस्य उद्यानविहारवर्णनप्रभृति वर्णनानि- महाकाव्यलक्षणस्य तत्तदंशसंयोजनपूर्वं — महाकाव्यत्वं साधयन्ति कुमारसंभवस्य ।

सर्ववृत्तिप्रवृत्तं — वैदर्भीप्रभृतिभिः रीतिभिः युक्तंतु वर्तते एव । रीतिमध्ये वैदर्भी — पांचाली अनयोः प्राधान्यं कालिदासकृतेषु काव्येषु । " वैदर्भीरीतिविस्तारे कालिदासो विशिष्यते ' इत्युक्तिः कदापि नातिशयोक्तिशंकां स्पृशेत ।

सर्वभावप्रभावितं इति विषये तु किं वक्तव्यम् ?

भावप्रकटनविषये अनुपमं खलु कौशलं कविवरस्य कालिदासस्य । सर्वैरपि कविभिः सर्वे भावाः कथं कथमपि बध्यन्ते एव काव्यादिषु । परं तान् एव भावान् यदा भगवान् कालिदासः सुकोमलया मधुरयाच शब्दरचनया संदर्शयति तदा खलु हन्त मानसं आनंदसागरे निमज्जति ।

उमामुखे विंबफलाधरोष्ठे व्यापारयामास विलोचनानि ।
लीलाकमलपत्राणि गणयामास पार्वती ॥
त्रिभागशेषासु निशासुच क्षणं निमील्य नेत्रे सहसा व्यबुध्यत ।
क्व नीलकंठ व्रजसीत्यलक्ष्यवाक् असत्यकण्ठार्पितबाहुबन्धना ॥

इति प्रभृति बहूनि उदाहरणानि सान्ति येषु भावनिदर्शनं परमरमणीयं वर्तते । एवं यानि यानि लक्षणानि महाकाव्यस्य तानि तानि कुमारसंभवे सामीचीन्येन युज्यन्ते ।

एकमवशिष्टम् —

महाकाव्यस्य कविबुद्धिकृतवर्णनावैचित्र्येऽपि रसात्मकत्वं समवशिष्यत एव । अग्निपुराणोक्तदिशा – रसपुष्टत्वं महाकाव्यस्य आवश्यकमेव । कुमारसंभवे तदपि अवश्यं वर्तते । शृंगारवर्णनाशिरोमणेः कालिदासस्य वर्णने नैव कदापि शृंगारः तिरोहितः स्यात् । कुमारसंभवेऽपि शृंगारः करुणः वीरश्चेति रसत्रयं वर्णितमति परिपोषपूर्वकम् । तत्र शृंगारः परिपोषितः परां कोटिमारूढः । तदपेक्षया किंचिदूनः करुणः । तदपेक्षयाच बहूनः परिवर्णितः कालिदासेन वीरोरसः । ननु मन्ये श्रृगांरपरिपोषार्थं यावानपेक्षितस्तावानेव प्रपंचो वर्णनं वा इतरेषाम् ।

एतावता कुमारसंभवस्य महाकाव्यत्वं वर्णितम् ।

अथ किंचिद् विचार्यते कुमारसंभवस्य प्रयोजन विषये:—

यद्धि काव्यस्य प्रयोजनं तदेव हि महाकाव्यस्येत्र न विवादलेशावकाशः । काव्यस्य प्रयोजनंच ।

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतर क्षतये ।
सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे ॥

इत्यपि मम्मटोक्तं सर्वसंमतमेव वर्तते । तत्र कुमारसंभवं महाकाव्यं निर्मितवतः कालिदासस्य - यशः अर्थः सद्यः परानिर्वृतिश्च अवश्यमेव जाता स्यात् इत्यत्र न विचारणा करणीया । कुमारसंभवतः कालिदासस्य शिवेतर क्षतिरप्रसिद्धा । उर्वरितं प्रयोजन द्वयं तु मम मते न कविनिष्ठं अपितु श्रोतृनिष्ठं वर्तन्ते । कान्तासंमितोपदेशः काव्यतः पाठकेषु उपयुज्यते । तथैवच व्यवहारवेदनं अपि । एवं प्राचीनेषु बहुषु - काव्येषु यद्दृश्यते विनोदनमेव । मुख्यो हेतुः तदेवहि कुमारसंभवेऽपि वक्तुं युक्तम् । किमपि विशिष्टमुद्देश्यं

निश्चित्य नायं प्रवृत्तः कविवरः काव्यनिर्माणे। नचैवास्ति धर्मशिक्षा प्रचारो वा। नैव कृतं कस्यापि आचारजातस्य वर्णनं समर्थनं तिरस्करणं वा। महाकाव्ये सर्वघटनानां प्रसंगसत्त्वेऽपि न कुत्रापि कवेरभिनिविष्टत्वं दृष्टिपथं अध्यारोहति।

नचैवं प्रतिभाति - मुक्तिं मनसि कृत्य कालिदासः काव्यं निर्ममे। एकः शब्दः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुक् भवति इति व्याकरणमहाभाष्योक्तदिशा स्यान्नाम कवेर्मुक्तिप्राप्तिः। परं न वयं मनसि कुर्मः कालिदासः कृते काव्ये मुक्तः स्याम् इति हेतुना चकार काव्यरचनामिति। मुक्तिं ब्रह्मप्राप्तिं वा मनसि कुर्वन् न सर्वथा प्राधान्येन शृंगारं वर्णयेत्। सहस्रसंख्यात्मके काव्येऽस्मिन् यावन्ति प्रवृत्तिजनकानि उत्तेजकानि विलासवर्धकानि शृंगारमधुराणि विलसन्ति पद्यानि न तेषां शतांशेनापि - वैराग्यवर्णकानि अथवा मुक्तिहेतुभूतभक्त्यादि प्रतिपादकानि तदर्थदर्शकानि वा पद्यानि सन्ति। कालिदासस्य - पद्यानि वाक्यानि - शब्दाः किंबहुना तदवयवा अपि शृंगारवर्णनचतुरा दरीदृश्यन्ते। अतो निश्चितं प्रतिभाति मे - न कालिदासः किमपि हेतुं निश्चित्य काव्यं रचयामास। हेतुरासीत् स च पूर्वोक्तो मनोविनोदनम्।

कृपालवः पाठकाः—अस्य वक्तव्यस्य नायं आशयः - कालिदासः अब्रह्मवित् आचारानभिज्ञः धर्मप्रचारपराङ्मुखः धर्मरक्षाविषये उदासीनो वा आसीत् मम तु कुमारसंभवं रघुवंशं मेघदूतं पश्यतः प्रतिभाति नूनं यत् - धर्म-विज्ञान-प्रभृति तत्त्वज्ञानादिकं मनसि कृत्वा न कालिदासः काव्यं विलिलेख। अपितु प्रतिभास्फुरणानुसारं विनोदनार्थमेव काव्यं रचयामास। अयि वाचकवरेण्याः एतावता लेखेनोक्ताः काव्यगुणा महाकाव्यगुणा वा सर्वसाधारणा एव वर्तन्ते। महाकाव्यं रचयन्कविः नैव कदापि साधारणः स्यात् यः किमपि लक्षणहीनं - रीतिहीनं रसहीनं वा काव्यं निर्मास्यति। नचापि वा सहृदयशिरोमणयः तं नीरसं गुणहीनं काव्यं महा काव्यं वा व्यवहरेयुः। विद्यते एव हि कस्यापि कवेः किमपि वैशिष्ट्यं तदनुसारं सरसप्रवाहीभाषाविशारदस्य कालिदासस्य किमस्ति वैशिष्ट्यं तदवश्यं द्रष्टव्यमस्ति। तदर्थमेव प्रथमतः कुमारसंभवस्य महाकाव्यत्वं समवस्थाप्य तत्र - अन्यत्र च दृश्यमानाः कालिदासविशेषाः समुपस्थाप्यन्ते।

"तत्र तावत् उपमा कालिदासस्य भारवेरर्थगौरवम् । दण्डिनः पदलालित्यं माघे सन्ति त्रयोगुणाः इति" सुप्रसिद्धपद्यानुसारं लोकविलक्षणं उपमापाटवं कालिदासस्य सहृदयहृदयानि चमत्करोति । न कदापि तस्य कुत्रात्यमपि श्लोकपंचकं मनोहरोपमां विनालभ्येत । उपमा बहुतराणां अलंकाराणां जीवातु-भूतेति स्वभावत एव सर्वेषु अलंकारेषु कौशलं स्वाभाविकमेव भवति । हन्त सत्यं खलु कालिदासेनैव विरचनीयः सुललितोपमालंकारः । पश्यतां "क्षीरोदवेलेव सफेनपुंजा पर्याप्तचंद्रेव शरत्त्रियामा । नवं नवक्षौमनिवासिनी सा भूयो बभौ दर्पणमादधाना । (७-२६) पश्य पार्वति नवेन्दुरश्मिभिः भिन्नसांद्रतिमिरं नभस्तलम् । लक्ष्यते द्विरदभोगभूषितं सप्रसादमिव मानसं सरः ' ) ॥ नास्ति विवेचनस्य आवश्यकता । ८-६४ एवं बहूनि उदाहरणानि सन्ति । दिङ्मा-त्रमिह दर्शितम् । एवमुपमायां निर्भरः कालिदासः ।

'उमायामिव शंकर' इति प्रसिद्धम् । मान्याः—

अपरे त्रयो विशेषाः समुल्लसन्ति तस्य काव्ये कुमारसंभवे अन्यत्र सर्व-त्रापि वा ते च—

१ — भाषाया ओघः
२ — अनुपमः प्रसादः
३ — वर्णनस्य - स्वाभाविकता च ।

यथा खलु गंगायाः प्रवाहः सातत्येन परस्परं संबद्धः प्रवहति - गत्या च आनन्दयति तथैव भाषाया अपि ओघः सहृदयैः समनुभूयते । यथा किल - प्रवाहस्य गतिः लोचनैकरम्या वेद्याच तथैव भाषौघोऽपि ज्ञातुं शक्यते - परं न वर्णयितुं शक्यते । भगवतः कालिदासस्य काव्ये एवमेवौघः परिदृश्यते पठ्यतां अस्त्युत्तरस्यां दिशिदेवतात्मा इत्यारभ्य कुमारः - पठ्यतां वा रघु-वंशस्य अष्टमः सर्गः— किमनुभूयते पश्यन्तु । यथा किल रमणीयं गंगौघं पश्यतः चेतस्तरलितं भवति चक्षुषी च प्रवाहगत्यनुरोधात्परिभ्रमतः सुखं चानुभवतः सत्यं तथैव कालिदासस्य कुमारसंभवं पठ्यमानस्य - श्रवणं कुर्वतः अभ्यासं कुर्वतो वा भाषौघेन तरलितं भवति चेतः । तरलिते चेतसि द्रवः सुलभः । विद्रुते चेतसि रसनिष्पत्तिः पुष्टिरास्वादो वा त्वरितं सुखं

च भवतीति ज्ञायते एव रसमार्मिकैः । एवं भावौवैनैव प्रथमं समाकर्षयति कालिदासः सहृदयचेतांसि इति वैशिष्ट्यं खलु तस्य ।

अथ प्रसादः—लक्षणं हि प्रसादस्य शाब्दस्य गाढत्वशैथिल्याभ्यां व्युत्क्रमेण मिश्रणं प्रबन्धस्य ।

आर्थश्च प्रसादः—

यावदर्थकपदत्त्वरूपमर्थवैमल्यं इति द्विरूपोऽपि प्रसादः कालिदासीये काव्ये साविशेषं वरीवर्तीति विद्मः । गृह्यतां कुमारस्य कुत्रत्योऽपि सर्गः न तत्रैकस्मिन्नपि श्लोके पादपूरणार्थं प्रक्षिप्ता चवैतुहि प्रभृतयो वर्णाः समुपलभ्येरन् । ननु मन्ये यावदर्थकपदत्त्वरूपं अर्थ वैमल्यं प्रसादः ' इति प्रसादं लक्षयन् लाक्षणिकः स्वान्ते कालिदासीयं काव्यमेव संस्थाप्य लक्षणं चकार प्रसादस्येति । सर्वास्मिन्श्लोकजाते अनुस्यूतः प्रसादो गुणः ।

यच्चापरं प्रसादलक्षणं:—ध्वन्यालोके समर्पकत्वं काव्यस्य यत्तु सर्वरसान्प्रति । स प्रसादो गुणो ज्ञेयः सर्वसाधारणक्रियः । तदपि शृंगारस्य रसराजस्य करुणस्य वा परिपोषणं पंडितस्य काव्ये एतल्लक्षणकः प्रसादो गुणः नास्तीति वक्तुं शक्यते वा ? कुमारसंभवं विमानतः परिपश्यन्नपि नैवं साहसं कुर्यात् ।

यश्च रसगत प्रसादः काव्यप्रकाशे शुष्केन्धनादिवत्स्वच्छजलवत्सहसैव यः । व्याप्नोत्यन्यत्प्रसादोसौ सर्वत्र विहिता स्थितिः स चापि कालिदासीये सर्वास्मिन्काव्ये नाटके च दत्तहस्तस्तिष्ठतीति प्रत्यक्षं सर्वेषाम् । लेखविस्तारभिया तुलनया न प्रदर्शयामि । सामान्यतो निदर्शयामः—गृह्यतां माघे वर्णितं शृंगारवर्णनं - कुमारेच वर्णितम् । तथैवच किरातार्जुनीये कृतं माघे जलविहारवर्णनप्रसंगे पोषितः शृंगारः शिवपार्वत्यो श्च वर्णितः शृंगारः । अन्यत्र च वर्णितः कालिदासेन शृंगारः । सूक्ष्मेक्षिकया परिपश्यतो भेदो दृष्टिपथं अध्यारोहत्येव । पठिते द्वयोरपि शृंगारवर्णने अवश्यमेव बोधवैलक्षण्यं आस्वादवैचित्र्यंच अनुभूयते एव ।

यदपि च फलितं भवति प्रसादस्य लक्षणं - श्रुते शब्दमात्रे झटिति अर्थबोधकत्वं तच्च कालिदासस्य प्रतिश्लोके वरीवर्ति ।

तुलनार्थं-किरात-शिशुपालवध कुमारसंभवं इति काव्यत्रयं स्थाप्यते यदि तर्हि इदं फलितं भवति - उपर्युक्त प्रसादलक्षणयुताः श्लोकाः कुमारे शते शतं भविष्यन्ति । किराते माघे वा शते पंचाशत् भविष्यन्ति न वा । अहं तु मन्ये सर्वापेक्षया कालिदासे प्रसादो विशेषेण संतिष्ठते ।

अयि मान्याः विस्तरितो लेखः - लाघवेन तृतीयं विशेषं विनिवेद्य विरम्यते ।

वर्णनस्य स्वाभाविकता — पठिते कुमारसंभवे एवं भाति —

कस्यापि वर्णनं कुर्वन्कालिदासः स्वभावं नातिक्रामति । अनुप्रासादीनां रचना वर्तते कुत्रचिद् यमकानि सन्ति । परंतु कुत्रापि यमकार्थं अनुप्रासार्थं-अन्यस्य वा कस्यापि अलंकारार्थं - स्वाभाविकं मार्गं - शब्दजातं वा परित्यज्य विशेषान् शब्दान् वर्णनानि वा न समाश्रयति । यथा किल मनुष्यः व्यवहारे सरलं ब्रवीति प्राप्ते प्रसंगे विशिष्टे विशिष्टं ब्रूते स्वाभाविकी प्रतिभाति । नास्ति विशिष्य प्रयत्य वा कृता शब्दरचना नास्ति — आहत्य कृतानां कल्पनानां जटिलता नचास्तिच्च अर्थकौटिल्यम् —

अपितु केवलं सहजसुंदरं अकृत्रिम लावण्यं मधुरतरं कामिनीवदनकमलं प्रतिभाति तथैव किल सहजरमणीयं काव्यं कालिदासस्य प्रतिभाति —

अयि पंडिताः— मदवलोकने समागतानां उपर्युक्तानां त्रयाणां गुणानां यथामति कृतो विचारः- कुत्र कालिदासगुणसिंधुः कुत्राच पामरोहं । परं यथाशक्ति निमज्जनं कृत्वा अपश्यं मौक्तिकत्रयं किमन्यत् । इयि संप्रार्थ्य भगवन्तं कालिदासं च नत्वा विरम्यतेः—

# तत्रापि च चतुर्थोऽङ्कः

ले. सौ. रमाबाई गोकर्णे पूना.

संस्कृत वाङ्मये कालिदासविरचितं अभिज्ञान शाकुन्तलं नाम नाटकं सर्वेषु नाटकेषु अतीव रमणीयमिति सर्वैरपि उच्यते । तस्मिन् नाटके चतुर्थोऽङ्कः श्रेष्ठतरः इति सर्वेषामपि सम्मतं वर्तते । अस्यांकस्य वैशिष्ट्यं लेखेऽस्मिन् समर्थयितुमिच्छामि । प्रथमं तावत् नाटकस्य वस्तु एवास्य वैशिष्ट्यस्य कारणम् । नाटकस्य कथा महाभारतादुध्दताऽपि दुर्वाससः शापः कालिदासस्य नैपुण्यमेव दर्शयति । शापस्य निर्देशः नाटकस्य नवां चेतनामुत्पादयति । नोचेत् दुष्यन्तस्य शकुन्तलायाश्च गान्धर्वविवाहनंतरमेव नाटकस्य परिसमाप्तिः अभविष्यत् । दुर्वाससः शापेनैव दुष्यन्तस्य सद्गुणा आविष्कृताः । प्रथम द्वितीय तृतीयांकेषु दुष्यन्तस्य मानुषतासुलभा कामुकता समीचीनतया वर्ण्यते । दुर्वाससः शापादेव कामप्रेरितान् विचारान् विसृज्य धर्मप्रेरितान् विचारानंगीकृतवान् । अन्यथा अग्निमित्रपुरूरवसाविव दुष्यन्तोपि सामान्य नायकः इति अगणिष्यत् । पंचमांकादूर्ध्वं दुष्यन्तस्य गुणाः अतिस्फुटतया दृश्यन्ते । तत्सर्वमपि कालिदासस्य नाट्यशास्त्रकौशल्यम् । शापानंतरमपि अभिज्ञानांगुलीयकदर्शनेन शकुन्तला दुष्यन्तयोः संयोगः अभविष्यत् । तदाऽपि नाटकस्य समाप्तिः भूत्वा किमपि स्वारस्यं न स्यात् । तस्मादंगुलीयस्य नाशोपि कालिदासस्य चातुर्यं दर्शयति ।

दुष्यन्तस्य अनपत्यता एव तस्य शकुन्तलाविवाहस्य कारणमासीत् । अत्र तेन प्रजायै गृहमेधिनामिति धर्मशास्त्रस्य तत्वमेवानुसृतं अतः तस्य परिग्रहबहुत्वेऽपि शकुन्तलाविवाहः राज्यपरिपालनदृष्ट्या योग्य एवासीत् । भौतिकानुरागः कथमध्यात्मिकमनुरागं भजते इति यत् कालिदासेन प्रतिपादयितव्यमासीत् । तस्य बीजं चुतर्थांके एव दृश्यते । दुष्यन्तं निध्यायंतीम् विस्मृत स्वकर्तव्यां शकुन्तलां केवलं निर्भत्सयितुमेव दुर्वासाः शपति । अतः वस्तुदृष्ट्या चतुर्थांकः अतीव रमणीयः उच्चतरं कवेश्चातुर्यंच प्रकटयति ।

चतुर्थांके कविना सामान्यजनानामनुभवा यथायथं वर्णिताः । दुहितॄणां विवाहानंतरं जायमानं प्रथमं वियोगदुःखमसामान्येन कौशल्येन वर्णितम् ।

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया,
कण्ठस्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।
वैक्लव्यं मम तावदीदृशमहो स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ॥

भर्तुः गृहे कथं वर्तनीयमिति कण्वस्य उपदेशः हृदयद्रावकः सर्वेषां मनांसि वशीकरोति ।

शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥

पितृवियोगदुःखितां शकुन्तलां कण्वः अतीव हृदयङ्गमैर्वाक्यैः सांत्वयति ।

अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैस्तस्य प्रतिक्षणमाकुला ।
तनयमचिरात्प्राचीवार्कं प्रसूय च पावनम्
मम विरहजां न त्वं वत्से ! शुचं गणयिष्यसि ॥

गुणवते कन्या प्रतिपादनीयेति पितुः सङ्कल्पः स्वयमेव सफलीभवति, कण्वं च चिन्ताविरहितं करोति ।

अर्थो हि कन्या परकीय एव
तामद्य सम्प्रेष्य परिग्रहीतुः ।
जातो ममायं विशदः प्रकामम्
प्रत्यर्पितन्यास इवान्तरात्मा ॥

अतः गृहस्थाश्रमिभिः कन्याविषये अनुभूयमाना भावा अतिमधुरैः शब्दैः वाचकानां मनसि प्रत्ययं कुर्वन्ति ।

अत्र करुणरसः प्रतिवाक्यं प्रद्रवति । करुणरसस्य प्रतिपादयितारं भवभूतिमपि अस्मिन्नङ्के कालिदासः अतिशेते ।

चतुर्थेऽङ्के कालिदासस्य निसर्गवर्णनं, पात्राणां माधुर्यं, सरलता, भावनान कोमलता च अप्रतिमभाषासौंदर्येण चित्रितानि ।

यदि चतुर्थांकः सम्यक्तया वाचितः तर्हि कस्य गृहस्थाश्रमिणः नयनायुगलं अश्रुभिः पूरितं न स्यात् ।

तस्मादेव यत्सत्यमयं श्लोकः मनीषिभिरुच्यते ।

काव्येषु नाटकं रम्यं, तत्र रम्यं शकुन्तला ।
तत्रापि च चतुर्थोऽङ्कः तत्र श्लोकचतुष्टयम् ॥

---

# कालिदासस्य नाटकेषु नायकाः

ले. डॉ. बी. आर. गोकर्ण एम्. बी. बी. एस्. महोदयः पुणे.

कालिदासः त्रीणि नाटकानि व्यरचयत्, मालविकाग्निमित्रं विक्रमोर्वशीयं शाकुन्तलं च । मालविकाग्निमित्रं तस्य प्रथमं नाटकमिति नाटकस्य प्रस्तावनायामेव दृश्यते । ' प्रथितयशसां भासकविपुत्रसौमिल्लकादीनां प्रबन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य क्रियायां कथं पारिषदो बहुमानः ' इति नाटकस्य प्रारम्भे एव उच्यते । तस्मिन्नग्निमित्रः नायकः कामपि चित्रगतां समुपारूढयौवनां कन्यकां विलोक्य तद्रूपमोहितः तां परिणेतुमिच्छति । तस्य भार्याद्वये वर्तमानेऽपि पुत्रेऽपि च अष्टादशवर्षदेशीये सेनां नेतुं क्षमे सत्यपि

अग्निमित्रस्य हृदयं तस्य राज्ञ्याः परिचारिकायां मालविकायां बद्धानुरागं भवति। केवलं दाक्षिण्यमवलम्ब्य स्वप्रभुत्वं दर्शयितुमक्षमः विदूषकस्य साहाय्येनैव स्वमनोरथं प्राप्नोति। अग्निमित्रः धीरः राजतंत्रेषु कुशलः स्वामात्यैः सेनानीभिश्च भृशमादृतः, किंतु मालविकायां बद्धभावः विदूषकपरवशो भवति। विदूषकस्य साहाय्येन विना मालविकातिरशक्यप्राया भवति। राज्ययोग्येषु धैर्यादिगुणेषु सत्स्वपि तस्य स्त्रीलंपटत्वमेव प्राधान्येन नाटके दृश्यते। "निश्चिन्तो धीरललितः कलासक्तः सुखी मृदुः" इति नाट्यशास्त्रे धीरललितनायकस्य लक्षणमग्निमित्रे युज्यते।

विक्रमोर्वशीये पुरूरवाः स्वप्रभावदर्शनेन दानवापह्नृतामुर्वशीं मोचयति। तस्य पराक्रमप्रीता उर्वशी तस्मिन्बद्धभावा भवति। पुरूरवा अपि तामप्रतिमरूपां प्रथमदर्शने एव कामयते। एवं तयोः परस्परप्रेमा इन्द्रस्य साहाय्येन राज्ञ्याः सम्मत्या च विवाहरूपमभजत्। अत्र पुरूरवाः स्वपराक्रमेण उर्वश्याः विश्रम्भं लभते। स्वबाहुबलेन दानवं जित्वाऽपि इन्द्रस्य वीर्येणैव स जित इति कथयति।

'ननु वज्रिण एव वीर्यमेतद्विजयन्ते द्विषतो यदस्य पक्ष्याः।'

वसुधाधरकन्दराभिसर्पी प्रतिशब्दोपि हरेर्भिनत्ति नागान्' ॥ अनेन तस्य पराक्रमः विनीतत्वं च दृश्यते। "अनुत्सेकः खलु विक्रमालंकारः" इति तस्य गुणवर्णनं नाटके दृश्यते। एतौ धीरोदात्तनायकस्य द्वौ गुणावेवास्मिन्नायके सहजतया दृश्येते। एतौ विहाय अन्ये सर्वे गुणा धीरललितनायकोचिता एव।

शाकुन्तले दुष्यन्तः कालिदासस्य इतरौ नायकौ अतिरिच्य आदर्शप्रायो नायकः भवति। अपरिणतबुद्धिना कालिदासेन प्रथमं अग्निमित्रस्य नायकत्वं केवलं विषयलोलुपत्वेन वर्ण्यते। विक्रमोर्वशीये स्वप्रमादं जानन्नपि पुरूरवसम् आदर्शनायकोचितैर्गुणैर्वर्णयितुं नाशक्नोत्। किंतु शाकुन्तले परिपक्वधिया कालिदासेन दुष्यन्तस्य पात्रमसामान्येव वैशिष्ट्येन चित्रितम्। राजा दुष्यन्तो मृगयार्थं निर्गतः मृगमेकमनुधावन् कण्वाश्रमान्तिकं प्राप्तः। तत्र वैखानसेन आश्रममृगोऽयं न हंतव्यो न हंतव्यः,

न खलु खलु बाणस्सन्निपात्योऽयमस्मिन्
मृदुनि मृगशरीरे पुष्पराशाविवाग्निः ।
क्व बत हरिणकानां जीवितं चातिलोलम्
क्व च निशितनिपाताः वज्रसाराः शरास्ते ॥
तत्साधु कृतसंधानं प्रतिसंहर सायकम् ।
आर्तत्राणाय वः शस्त्रं न प्रहर्तुमनागसि ॥

इत्युक्तः राजा बाणं प्रतिसंहरति । अनेन कर्मणा दुष्यन्तस्य आश्रमवासिषु आदरः, अनपराधिषु असहायेषु अनुकंपा दृश्यते । 'सदृशमेतत्पुरुवंशप्रदीपस्य भवतः' इति वैखानसः तमभिनदति, सन्निहितं कण्वाश्रमं गत्वा अतिथिसत्कारं ग्रहीतुमभ्यर्थयते च । दुष्यन्तः तत्र गत्वा अतिथिसत्काराय पित्रा नियोजितां शकुन्तलां सह सखीभ्यां वृक्षसेचनकर्माणि उद्युक्तां वीक्ष्य विटपान्तरे प्रच्छन्नो भूत्वा तासां व्यापारान्निरीक्षते । शकुन्तलामव्याजमनोहरां दृष्ट्वा तस्यामनुरक्तो भवति । सदसद्विवेकबुद्ध्या उपेतोऽसौ राजा तया क्षत्रियकन्यकया एव भाव्यमिति मनसि चिंतयति । यतः

असंशयं क्षत्रपरिग्रहक्षमा
यदार्यमस्यामभिलाषि मे मनः ।
सतां हि संदेहपदेषु वस्तुषु
प्रमाणमंतःकरणप्रवृत्तयः ॥

दुष्यन्तस्य राज्ये असंख्याः अन्यवर्णीयाः कन्यका लावण्ये शकुन्तलामतिरिच्यमाना बह्व्यः आसन् । किंतु तस्य मनः तासु न अनुरक्तम् । क्षत्रियः क्षत्रियामेव परिणयेद् इति शास्त्रानुरोधः तेन परिपाल्यते । दुष्यन्तस्य द्वयोः भार्ययोः सत्योः अपि किमर्थं स शकुन्तलासंक्रांतहृदयो भवति ? । अग्निमित्रोपि भार्याद्वयोपेतः मालविकां परिणेतुं येनकेन प्रकारेण यतते । किंतु तयोः गुणेषु महदंतरं वर्तते । अग्निमित्रः केवलं विषयोपभोगनिरतः

कामापि अज्ञातकुलधर्मां कन्यकां परिणेतुमिच्छति । बहुदाराः हि राजानः इति सर्वेषां सम्मतम् । किंतु 'प्रजायै गृहमेधिनाम्' इतिन्यायेन अग्निमित्राय अन्यपरिग्रहस्यावश्यकता नासीत् । यतः तस्य राज्यपरिपालनाय एकः पुत्रः आसीत् । केवलं कामुकता एव मालविकाविवाहस्य कारणम् । परंतु दुष्यन्तस्य अनपत्यता एव तस्य विवाहस्य कारणमासीत् । प्रजायै-गृहमेधिनाम् इति तत्वं यथार्थतः अनुसृतं दुष्यन्तेन । धर्मशास्त्रानुरोधेन दुष्यन्तस्य विवाहः प्रशंसनीयः । राज्यपरिपालने स्ववंशोद्धरणएव तस्य महत्वकांक्षाऽऽसीत् । अतः क्षत्रियकुले जातामेवस्व स्य अन्तःकरणानुज्ञातां कन्यकां शास्त्रसंमतेन गांधर्वविधिना पर्यणयत् । शकुन्तलायाः मनः तस्मिन्ननुरक्तं दृष्ट्वैव राजा आत्मनः अनुरागं दर्शयति ।

अयं स ते तिष्ठति संगमोत्सुको<br>
विशंकसे भीरु यतोऽवधीरणाम् ।<br>
लभेत वा प्रार्थयिता न वा श्रियम्<br>
श्रिया दुरापः कथमीप्सितो भवेत् ॥

"बहुवल्लभाः राजानः श्रूयन्ते । यथा नौ प्रियसखी बंधुजनशोचनीया न भवति तथा निर्वाहय" इति अनुसूया राजानं वदति । किंतु दुष्यन्तः केवलं संतानाभिवृद्धये परिणिनीषुः एवं ब्रूते ।

परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे ।<br>
समुद्ररसना चोर्वी सखी च युवयोरियम् ॥

कण्वस्य परोक्षेऽपि स गांधर्वविधिना परिणयति 'भीरु' अलं गुरुजनभयेन । दृष्ट्वा ते विदितधर्मो तत्रभवान्नात्र दोषं ग्रहिष्यति कुलपतिः ।

गांधर्वेण विवाहेन बह्वयो राजर्षिकन्यकाः ।<br>
श्रूयन्ते परिणीतास्ताः पितृभिश्चाभिनंदिताः ॥ इति अन्तरनुकूलामपि बाह्यत प्रातिकूल्यं दर्शयन्तीं शकुन्तलामभिधत्ते दुष्यन्तः ।

एवं तयोः विवाहः संजातः । अत्रैव कथा समाप्तिप्राया आसीत् । किंतु कालिदासस्य बुद्धिचातुर्येण नाट्यशास्त्रपाटवेन च दुर्वाससः शापस्य सन्निवेशः पुनरपि कथां चित्ताकर्षकां करोति । दुर्वाससः शापेनैव दुष्यन्तस्य गुणविशेषाः अधिकतरम् अस्माकं दृष्टिपथमायान्ति । शापोपहतः दुष्यन्तः विवाहबद्धां शकुन्तलां विस्मरति ।

शार्ङ्गरवप्रभृतयः शकुंतलां पत्युः स्वीकरणार्थं दुष्यन्तस्य प्रासादे आनयन्ति । कण्वस्येमं संदेशं श्रावयन्ति च ।

त्वमर्हतां प्राग्रसरः स्मृतोऽसि नः<br>
शकुन्तला मूर्तिमती च सत्क्रिया ।<br>
समानयंस्तुल्यगुणं वधूवरम्<br>
चिरस्य वाच्यं न गतः प्रजापतिः ॥

किंतु दुष्यन्तश्चिन्तयन्नपि " न खलु स्वीकरणमत्रभवत्याः स्मरामि । तत्कथमिमामभिव्यक्तसत्वलक्षणां प्रति आत्मानं क्षेत्रिणमाशंकमानं पतिपत्स्ये " इति प्रतिभाषते । यदा शकुंतला आश्रमे कृतमनुरागं स्मारयति, तदा दुष्यन्तः स्वचरिते कलंकमारोपितं दृष्ट्वा

व्यपदेशमाविलयितुं किमीहसे जनमिमं च पातयितुम् ।<br>
कूलंकषेव सिंधुः प्रसन्नमंभस्तटतरुं च ॥

यदा शार्ङ्गरवः शकुंतलाग्रहणाय विविधैरुपायैरभ्यर्थयते तदा दुष्यन्तः एवं ब्रूते ।

कुमुदान्येव शशांकः सविता बोधयति पंकजान्येव ।<br>
वशिनां परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥<br>
मूढः स्यामहमेषा वा वदेन्मिथ्येति संशये ।<br>
दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांसुलः ॥

शकुन्तलाग्रहणाय एवंप्रार्थितोऽपि दुष्यन्तः तां संपूर्ण विस्मृत्य परपरिग्रह इति मत्वा 'दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांसुलः' इति तमेव पृच्छति ।

दुष्यन्तः वशी शास्त्रावलंबी विवेकी चासीत्। शकुंतलां प्रत्यादिष्टवतो दुष्यन्तस्य अन्तर्हृदये केऽपि भावाः उद्भूय तं पर्याकुलं कुर्वन्ति।

कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम्।
बलवत्तु दूयमानं प्रत्यायततीव मे हृदयम्॥

ततः किंचित्कालानंतरम् अभिज्ञानदर्शकमंगुलीयकं धीवरेणानीतं दृष्ट्वा सर्वमपि स्मरति, अनुतापम् ऋच्छति। स दुष्यन्तः राजकार्येषु कुशलः लोकप्रियः निःस्वार्थबुध्द्या प्रजाः पर्यपालयत्।

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते वृत्तिरेवंविधैव।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णम्
शमयति परितापं छायया संश्रितानाम्॥
नियमयसि विमार्गप्रस्थितानात्तदण्डः
प्रशमयसि विवादं कल्पसे रक्षणाय।
अतनुषु विभवेषु ज्ञातयः सन्तु नाम
त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम्॥

अग्निमित्रपुरूरवसौ केवलं अमात्यैः राज्यकार्यं निर्वाहयामासतुः। किंतु दुष्यन्तः आदर्शराज आसीत्, तस्य कर्तव्यदक्षता, आश्रमवासिनां शत्रुभ्यः परिपालनं, सत्यव्रतत्वं न्यायप्रियत्वादयो गुणाः कालिदासेन साकल्येन वर्णिताः। स एव न्यायाधीशः स एव भर्ता अपराधी च। किंतु निष्पक्षपातेन वर्तितं तेन।

इंद्रस्य साहाय्यार्थं गतेन तेन मारीचाश्रमे एको बालको दृष्टः। 'व्यतिषजति पदार्थानान्तरः कोऽपि हेतुरि' तिन्यायेन बालके अनुरक्तः तस्य मातुः नामधेयं प्रष्टुकामोऽपि 'अनार्यः परदारव्यवहारः' इति तं न पृच्छति। तस्याः समागमानंतरं दुष्यन्तः अनुतापं भजते।

सुतनु हृदयात्प्रत्यादेशव्यलीकमपैतु ते
किमपि मनसः संमोहो मे तदा बलवानभूत् ।

प्रबलतमसामेवंप्रायाः शुभेषु हि वृत्तयः
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशंकया ॥

तदनंतरमेव शापस्यायं विपाकः इति ज्ञातम् ।
एवं कालिदासेन दुष्यन्तः धीरोदात्तनायकोचितैर्गुणैः वर्ण्यते ।

महासत्वोऽतिगंभीरः क्षमावानविकत्थनः ।
स्थिरो निगूढाहंकारो धीरोदात्तो दृढव्रतः ॥

अधुना तुलनात्मकदृष्ट्या विमृशाम । अग्निमित्रः मर्त्यलोके एव स्वराज्यं परिपालयति । किंतु पुरूरवाः दुष्यन्तश्च मर्त्यलोके वसन्तौ अपि स्वर्गलोके इन्द्रस्य सहायकौ आस्ताम् । अग्निमित्रपुरूरवसौ राजकार्ये मंदादरावास्ताम् । किंतु दुष्यन्तः राजतंत्रेषु अतीव निपुणः आदर्शराज आसीत् । अग्निमित्रपुरूरवसौ कामिनौ, दुष्यन्तस्तु वशी आसीत् । पुरूरवाः दुष्यन्तश्च स्वप्रभावदर्शनेन उर्वशी-शकुन्तलयोः प्रेम अलभेताम् । किंतु अग्निमित्रः कौटिल्येनैव मालविकायाः प्रेमाणम् अलभत । मालविकाग्निमित्रे अग्निमित्रः मालविकानिरतो भवति । विक्रमोर्वशीये उर्वशी पुरूरवसं स्वपुत्रापेक्षया भृशं कामयते । किंतु दुष्यन्तस्य प्रेमा सर्वथा अनुकरणीयः सर्वामपि कामुकतां विहाय दृश्यते । अतः दुष्यन्तः कालिदासस्य सर्वेषु नायकेषु अत्युच्चस्थानं प्राप्नोति । सर्वेऽपि धीरोदात्तगुणाः अस्मिन्दृश्यन्ते ।

---

# आदर्शकविः

( ले. पाठक पण्ढरीनाथशर्मा )

विविधचरित्रचित्रिते जगति प्रतिपलं कियन्तो वा प्राणिनः न समुत्पद्यन्ते विलीयन्ते च । प्रायस्ते गणयितुमशक्या एव । ते केवलं जननीगर्भसंभूतत्वात्संभूता इत्युच्यन्ते । अप्येवं पशुपक्ष्यादयो न जायन्ते ? को वा भेदः पशूनां मानवानां वा । अथवा किमनेन मातुर्यौवनविघातकेन जन्मना । विरलाः खलु प्राणिनः जगति जायन्ते येषां शारदशशिप्रभाभास्वरकीर्तिः आदिशं समुल्लसति । यस्मिन्विषयेऽहं लेखनीं प्रवर्तयितुमिच्छामि सोऽपि किल महात्मा कालिदासः सर्वविधगुणैः संपन्नः मानवजीवनादर्शभूतः समजनि भारते । यश्च चमत्कृतिविशिष्टानि काव्यानि प्रणीय पाञ्चभौतिककलेवरस्य मृत्युना कथाशेषतां नीतत्वेऽपि यशःशरीरेणाकल्पं जीवति ।

अयं कविकुलललमभालतिलकः कविकालिदासः निजजन्मना भारतमेदिनीं कदा समलंकृतवान् इति समस्याऽतिविषमा महतां धीमतां सदस्यपि । यतः किल महाकविना स्वकीयग्रन्थेषु यत्रकुत्रचिन्नोद्घोषितं स्वजन्मकालादिविषये । तथापि अस्यां कठिनपरिस्थितौ कवेः समसामयिकानां लेखकानां च कृतिभिः शिलालेखादिभिः जनप्रसृताख्यायिकादिभिः पुरातत्त्वज्ञाः विद्वांसः यथाकथंचित् निश्चिन्वन्ति कवेः कालनिर्णयं, परं संशयग्रस्त एव सः ।

किंदेश्योऽसौ कविः इत्यत्रापि गवेषकाणां नैकमत्यम् । अस्य कवेः तत्तद्देशसविशेषवर्णनपरां प्रतिभामालोक्य केचिन्मालवीयः, पर्वतीय इत्यन्ये, वंगीय इत्यपरे आमनन्ति । परं सर्वगामिबुद्धित्वेन कविना सर्वाण्यपि प्रसंगगतानि स्थलानि सम्यग्वर्णितानि, नैतावता तस्य तद्देशत्वं वक्तुं शक्यम् । तथापि

" गृहाभावे तरोर्मूलेऽपि वसन्ति नरा यथा ।
युक्तप्रमाणालाभे तु सामान्योऽपि च गृह्यते ॥

इतिन्यायेन महाकविना उज्जयिन्यां चिरम् उषितमासीदिति बहुभि निश्चितम् । दिगन्तप्रसृतकीर्तिलसितः कविकालिदासः कस्य राज्ञः सभायां सभ्योऽभूत् । किं विक्रमादित्यस्य उत भोजस्य इत्यपि न सुनिश्चितम् । यदि विक्रमादित्यसभायां सभ्यश्चेत्तर्हि भोजराजस्य राजकविःकोऽयं कालिदासः इति प्रश्नः पुरतो जागर्तीव । त्रयः कालिदासा आसान्निति गवेषकैः अभ्युपगम्यते " एकोऽपि जीयते हन्त कालिदासो न एकाचित् ।

" शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु ॥

कालिदासनाम्ना विरचिता ग्रन्थाः चत्वारिंशत्संख्याकाः सन्ति । (१) शाकुन्तलम् (२) विक्रमोर्वशीयम् (३) मालविकाग्निमित्रम (४) रघुवंशम (५) कुमारसंभवम (६) मेघदूतम् (७) ऋतुसंहारम् (८) कुन्तेश्वर दौत्यम् (९) अम्बास्तवः (१०) कल्याणस्तवः (११) काञ्चीस्तोत्रम (१२) काव्यनाटकालंकाराः (१३) ,, (१४) गंगाष्टकद्वयम् (१५) घटखर्पर काव्यम् (१६) चण्डिकादण्डस्तोत्रम (१७) चर्चास्तवः (१८) ज्योतिर्विदाभरणम् (१९) दुर्घटकाव्यम् (२०) नलोदयः (२१) नवरत्नमाला (२२) पुष्पबाणविलासः (२३) मकरन्दस्तव (२४) मङ्गलाष्टकम् (२५) महापद्यषट्कम (२६) रत्नकोशः (२७) राक्षसकाव्यम् ( ८) लक्ष्मीस्तवः (२९) लघुस्तवः (३०) विद्वद्विनोदकाव्यम् (३१) वृन्दावनकाव्यम् (३२) वैद्यमनोरमा (३३) शुद्धिचन्द्रिका (३४) शृङ्गारतिलकः (३५) शृङ्गाररसाष्टकम् (३६) शृङ्गाररसकाव्यम् (३७) श्यामलादण्डकम् (३८) श्रुतबोधः (३९) सप्तश्लोकीरामायणम (४०) सेतुबंधः

विरलाः खलु सन्ति सरसमधुरपदविन्यासायाः सरस्वत्याः प्रियतमत्वमुपगताः कालिदाससदृक्षाः कवयः । नहि किमप्यसाधारणगुणमन्तरा एतत्

प्रियतमत्वं संभवति । कवेरस्य आर्यसंस्कृतेः गरीयान् अनुराग एव महान् गुणः अस्य काव्येषु यल्लोकोत्तरप्रसादः, अलौकिकं माधुर्यं, निरुपम् औदार्यं दरीदृश्यते तन्नूनमन्येषां काव्येषु नाक्षिलक्ष्यीभवति । अस्य काव्यानि मुहुर्मुहुः पठितान्यपि किमपि नूत्नं रसमेव वितरन्ति पाठकानां स्वान्ते । कदाचिदस्य शृङ्गाररसं परिश्राव्य क्षणादेव निराकृतविषयवासनस्य योगिनोऽपि चेतः कुसुमशरशरव्यतामुपगच्छद् युवरमणीवदनचुम्बनलालसां प्रापयति । ततः का कथा रसिकानाम् । नहि किल तादृशः कोपि कविराविरभूत् भारते योहि **कालिदासस्य** तुलामारोढुं प्रभवेत् । तदुक्तं केनचित्

पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठित**कालिदासा** ।
अद्यापि तत्तुल्यकवेरभावादनामिकी सार्थवती बभूव ॥

अस्य कवेः सर्वस्वभूतं अमरकृतिः अभिज्ञानशाकुन्तलम्
सर्वोत्कर्षमावहति । तदुक्तं " कालिदासस्य सर्वस्वमभिज्ञानशाकुन्तलम् । तत्रापि च चतुर्थोऽङ्कः तत्र श्लोकचतुष्टयम् " ॥

तत्र श्लोकचतुष्टये कीदृशः मनुजहृदयस्य भावनायाः प्रबलः प्रभावः उपवर्णितः । तत्रापि संयमिनां मुनीनां मानसस्य । तत्र कवेः कवित्वस्य पराकाष्ठा समजनि । शकुंतलायाः पतिसदनप्रस्थानवेलायाम् अनुपमं करुणरसस्योदाहरणं पठित्वा को वा सहृदयो न तन्मयो भवेत् । वस्तुतः पद्यं तत् ग्रावाणमपि रोदयति वज्रस्यापि हृदयं दलयति । यदा सर् विलियमजोन्साह्वेनांग्लविदुषा शाकुन्तलानुवादो विहितः तद्दृष्ट्वा पाश्चात्याः विस्मयमापन्नास्ते **कालिदासाय** " भारतीयशेक्सपीयर " इत्युपाधिं प्रदत्तवन्तः परं भारतीयानां हृदि न लवमात्रापि तादृशी अभिरुचिः । अस्य कारणं पारवश्यमेव । आस्तां तावत् । यद्यपि वाग्देवतावतारस्य कालिदासस्य विषये मत्कथनं पिष्टपेषणव्यापारं प्रकाशयति । तथापि " गुणाद्भुतवस्तु बह्वेव वर्णनीयम् " इति कवेरुपदेशवचनानुसारेण युक्तमेव तदित्यलम् । तदुक्तं नैषधे

वाग्जन्मवैफल्यमसह्यशल्यं गुणाद्भुते वस्तुनि मौनिता चेत् ।
खलत्वमल्पीयसि जल्पिते तु तदस्तु बन्दिभ्रमभूमितैव ॥

---

# श्रीकालिदासस्य दर्शनम्

लेखकः—वेदव्याकरणसाहित्यधर्मशास्त्राचार्यः
पं० चन्द्रदेवशर्मा पुराणतीर्थः साहित्यरत्नम्–कविकोकिलः अध्यापकः
राजसंस्कृतविद्यालये, बेतिया, चम्पारन (विहार)

शृङ्गारिणां सूक्तिमतां कवीनाम् श्रीकालिदासः प्रथितो वरीयान् ।
पदेपदे यस्य गिरां विसर्गे अमन्दमानन्दमुशन्ति सन्तः ॥१॥

सत्सेवनीयम सुकृतानुबद्धम् विधूय हृद्यन्तीरतावसादम् ।
काव्यं कवेस्तस्य न कस्य कुर्यात् सचेतसोऽन्तःपरमं प्रसादम् ॥२॥

महाकविर्यद्यपि भौतिकेषु भावेषु भूयो विनिवेशितात्मा ।
तत्रापि रक्तो रमणीविलासे विदन्ति तत्काव्यरसावगाहाः ॥३॥

इत्थं कविः कामपरस्तथापि नासीत् प्रमत्तः परमार्थतोऽसौ ।
तापत्रयोन्मूलनतत्त्वचिन्ता कृतैव तेन स्वकृतौ बहुत्र ॥४॥

केचित्तु तर्केण बुधा महीयस्तद्वैष्णवं धाम विवेचयन्ति ।
परे परं योगमुपेत्य देवं स्वान्तः सदैवानुभवन्ति साक्षात् ॥५॥

तर्केण केचित् प्रवरा बुधानां यदास्तितां साधु समर्थयन्ते ।
तन्नास्तितां चापि परे तथैव तर्काप्रतिष्ठत्वमतः स्मृतं तु ॥६॥

तर्कोऽप्रतिष्ठो न दुरूहसाध्यप्रसाधनेऽलम्भवतीति विज्ञाः ।
योगस्तु चित्तस्य बहिर्मुखत्वमपास्य देवं दिशते हृदिस्थम् ॥७॥

सङ्क्रान्तदर्शी कविराजराजे विभाव्य सम्यङ् मतमेतदेव ।
१ "तत्त्वावबोधैकफलो न तर्क" इत्यग्निमित्रे समब्रवीदद्वि ॥८॥
२ "मनो नवद्वारनिषिद्धवृत्ति हृदि व्यवस्थाप्य समाधिवश्यम् ।
यमक्षरं क्षेत्रविदो विदुस्तमात्मानमात्मन्यवलोकयन्तम्",
समाधिमन्तं शिवमित्युदारं निर्वर्ण्य भक्त्याऽऽप्लुतमानसोऽयम् ।
कविर्मनीषी निजयोगनिष्ठां सन्तापशान्त्यै विशदं व्यनक्ति ॥९॥
प्राप्तुं यथा भौमसुखस्य सारम् रतिर्विलासे प्रमदोत्तमानाम् ।
दिव्यां तथा शान्तिमुपैतुमासीत् प्रीतिः कवेः कृष्णपदाब्जरेणौ ॥१०॥
एकस्य विष्णोरखिलेश्वरस्य विभूतिरूपान् स सुरानमंस्त ।
हरे हरौ ब्रह्मणि चापि भेदो न तस्य तत्त्वैकदृशो बभूव ॥११॥
१ एकैव मूर्तिर्विभिदे त्रिधा सा सामान्यमेषां प्रथमावरत्वम् ।
विष्णोर्हरस्तस्य हरिः कदाचिद् वेधास्तयोस्तावपि धातुराद्यौ ॥"
सुव्यक्तमस्मिन् स महानुभावः पद्ये मतं नैजमुदाजहार ।
नोच्चावचत्वं भगवत्सु तस्य देवेषु दृष्टौ प्रथितं कदाचित् ॥१२॥
ये शैवभावं विभजन्ति तस्मिन् ये शाक्तभावञ्च समाजयन्ति ।
नूनं तु तैस्तस्य मतं न सम्यक् समीक्षितं सद्धिषणावगाहैः ॥१३॥
रघौ२ रघूणामधिपं विरिञ्चं स सम्भवे देवगणैश्च शम्भुम् ।
निरस्तवैषम्यमलं प्रकीर्त्य व्याख्यात् कविः स्वं किल निर्विकल्पम् ॥१४॥
गङ्गां गिरा गौरवगर्भयाऽलं गवेषणागुम्फितया गृणन्तम् ।
गुरुं गिरां तं गणयामि शश्वत् गवेषयन्तङ्गतिमुद्गतीनाम् ॥१५॥
सङ्गः पदार्थेष्वथ भौतिकेषु दुरन्तदुःखाय शरीरभाजाम् ।
रमेत शश्वत्तदसङ्ग एव शान्त्यै कवेस्तस्य मतिर्दृढाऽऽसीत् ॥१६॥

---

१ मालविकाग्निमित्रे. २ कुमारसम्भवे.
१ कुमारसम्भवे २ रघुवंशे ३ कुमारसम्भवे

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



४ " अवगच्छति मूढचेतनः प्रियनाशं हृदि शल्यमर्पितम् ।
स्थिरधीस्तु तदेव मन्यते कुशलद्वारतया समुद्धृतम् ॥ "

अनेन पद्येन तदीयमेतत् स्पष्टीकृतं वास्तवदर्शनं तु ।
स्त्रीसङ्गिवृत्तं तु कवेः कथायामासक्तपुंसां गतिवर्णनाय ॥१७॥

इत्थं प्रपञ्चे पतितोऽपि विद्वांस्तत्त्वं प्रपञ्चातिगमव्ययमेयम् ।
परामृशन्नन्तरुदारचेता योगं स भोगेऽन्तरयांञ्चकार ॥१८॥

---

# कालिदासस्य नाटकनैपुण्यम्

( माधव गणेश जोशी आयुर्वेदाचार्यः पुण्यपत्तनम् )

काव्येषु नाटकं रम्यं तत्रापि च शकुंतला ।
तत्रापि च चतुर्थोऽङ्कः तत्र श्लोकचतुष्टयम् ॥

यत् सत्योऽयं सार्थश्च श्लोकः । कालिदासविरचितनाटकेषु विशेषतः शाकुन्तलनाटके स्वीयं नाटकनैपुण्यं प्रदर्शितं कालिदासेन । तस्मादेव केनाऽपि कविना उपरिनिर्दिष्टः श्लोकः स्फूर्त्या एव लिखितः । कालिदासेन नाटकत्रयं विरचितम् । तेषु गुणानुक्रमणे शाकुन्तलस्य प्रथमा श्रेणिः, द्वितीया विक्रमोर्वशीयस्य, तृतीया च मालविकाग्निमित्राकृतेः । त्रिष्वपि नाटकेषु नायकनायिकयोः परस्परसंबंधः तयोः संभाषणपद्धतिश्च, तथा विरहावस्थावर्णनमपि हृदयस्पर्शि । वस्तु ( Plot ) प्रतिपादनपद्धतिरपि विशिष्टा । नाटकप्रेक्षणसमये श्रोतृवर्गः नाटकवस्तुनि तल्लीनः करणीयः इति नाटककारस्य प्रथमो गुणः । सोऽयं गुणः कालिदासे आधिक्येनास्ति । प्रेक्षकैः स्वीयं सुखं

---

४ रघुवंशे.

वा दुःखं तत्समये बिस्मृत्य नाटकरसानन्द एवास्वाद्यते । पुराणोध्दृतायाः सरलायाः कथाया नाटकयोग्यं चित्ताकर्षकं परिवर्तनं सम्यक्तया कृत्वा प्रेक्षकपुरस्तात् नाटकरूपेण सैव कथा प्रस्थापयतीति दुष्करं कर्म खलु । परं तदपि लीलयैव कालिदासेन शाकुन्तलनाटके कृतम् । शाकुन्तलनाटके दुर्वासस आगमनशापप्रसंगाभावश्चेत्तर्हि नाटकं नीरसं प्रेक्षकाणामप्रियं भवेदिति कृत्वैव काल्पनिकप्रसंगान् निर्माय लोकचित्ताकर्षकं नाटकं रचितम् । कल्पनाचातुर्यं नाटककारस्य द्वितीयो गुणः इति कृत्वैव कल्पनावैदग्ध्यं कालिदासेन प्रकटितं नाटकद्वये । प्राधान्येन दृश्यते तस्य सर्वकाव्येषु श्रृंगाररसे प्रीतिः । विक्रमोर्वशीप्रेमाविष्करणं तयोः परस्परमदनबाधा तथा मालविकाग्निमत्रयोः प्रणयलीला, शाकुंतलस्य तृतीयेंऽके दुष्यन्तविरहेण शकुंतलाया, अस्वस्थतावर्णनमित्युदाहरणत्रयं श्रृंगाररसस्य । प्रेमातिशयेन शकुंतलाहस्तं गृहीत्वा राजा तस्या मुखेन्दुं परिचुम्बितुमिच्छति, सा च नाट्येन परिहरतीति प्रसंगः श्रृंगाररसस्य परमोच्चकोटितां प्राप्तः इति को न ब्रूयात् । विंशतितमेऽस्मिन् शतकेऽपि न केनापि नाटककारेण प्रदर्शित एवंप्रकारकः प्रसंगः ।

प्रसंगयोजनाऽपि तस्य साधीयसी । तदेव नाटकरचयितुः कौशलं नाम यत् प्रेक्षकः संपूर्णनाटकावलोकनाद्विना नाटकीयसंविधानकपर्यवसानं न कल्पयितुमपि शक्नुयात् । प्रत्यंकं तस्य जिज्ञासा वर्धनीयैव । एष एव महीयान् गुणः नाटककारस्य यस्याधिक्येनास्तित्वं कालिदासे । प्रसंगानुसारं योजनापि हृदयानन्दकरी । शाकुन्तले विदूषकवाक्यानि यथा हासयन्ति तथैव चतुर्थेंऽके कण्वस्य शकुंतलाप्रेषणसमये कृतः उपदेशः प्रेक्षकान् रोदयति । शोकहास्यरसयोराविष्करणमेकस्मिन्नाटके कालिदासस्य करतलामलकवच्चकास्तितराम् ।

शृंगाररसप्रधाने नाटकेऽपि गंभीरप्रसंगाः सारत्वेन वर्तन्ते । उपदेशात्मकाः चत्वारः श्लोकाः नाटकस्य हृदयवत् । अद्यतनीये काले स्थाने एवेति न कोऽपि संशयः । एतान् चतुःश्लोकान् विरचय्य कालिदासेन स्त्रीजाति-

विषये प्रतिगामिभूमिका स्वीकृता 'न स्त्री स्वातंत्र्यमर्हती' ति पद्यस्य पुरस्कारः कृतः इति केचन टीकाकाराः वदन्ति। परं येन कण्वेन 'शुश्रूषस्व गुरू' नित्यादि-श्लोकैः उपदेशः शकुन्तलायै कृतः, तथैव स्वाधिकारवाण्या दुष्यन्ताय 'सामान्य-प्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया' एवंप्रकारक उपदेशः कृतः इति कदापि न विस्मरणीयम्। एवं च कालिदासनाटकानि पठित्वा स उत्तमनाटककारः एवेति वक्तुं मोहयति चेतः इत्यलम्।

---

## "॥ कविकालिदासकविताकौशल्यम् ॥"

("कवितिलकः, साहित्यालङ्कारः" राजा श्री. गुरुराजाचार्यः श्रीपादपुत्रः जगद्गुरु श्रीराघवेंद्र स्वामिनां मठः श्रीमन्त्रालयक्षेत्रम्.)

पीत्वा यन्मुखनिस्सृतं बुधवराः काव्यामृतं निस्तुलम्
पीयूषं ह्यवमन्वते यतिगुरुं षड्दर्शनीदर्शनम्।
स्मृत्वा तं गुरुराजनामककविर्भक्त्या सुधीन्द्रंसमा-
विष्कुर्वेऽहं कविकालिदासकविताकौशल्यमस्वल्पधीः ॥ १ ॥

इह खलु विविधसांसारिकक्लेशमलीमसचेतसां दुःखाम्बुधिनिमग्नानां मनुजानां मनस्समुल्हासजनकं सत्काव्यादन्यन्नोपलभ्यते, तेन हि पठ्यमानेन, मनोविषादः दूरतः प्रयाति, अनुभूयते च सुखं, संजनिष्यति च लोकविज्ञानं, प्रतिभाति च बुद्धिः, आर्जते च यशः। किञ्च या वेदादिना कर्तव्यताधीः, सैव काव्येन सरसा भवति। एतदभिप्रेत्योक्तं काव्यप्रकाशे — 'काव्यं यशसे अर्थकृते व्यवहारविदे शिवेतरक्षतये। सद्यःपरनिवृतये कान्तासम्मिततयोपदेशयुज' इति।

यद्यपि ''काव्यालापांश्च वर्जये'' दितिनिषेधः श्रूयते, स च असत्काव्य-विषयकः। सत्काव्यस्य प्रेक्षावदुपादेयतायाः अनुभवसिद्धत्वात्। अत एव रामायणादीनां महाजनपरिगृहीतता दृश्यते। काव्यशब्दोऽयं कविकर्मवाची, तल्लक्षणन्तु 'निर्दोषत्वे सति सगुणालङ्कारशब्दार्थत्व' मिति वैद्यनाथेन कथितम्। पण्डितराजेन तु– 'रमणीयार्थप्रतिपादकशब्दः काव्यम्' इति ''प्रतिपाद्य-स्वविशिष्टजनकतावच्छेदकार्थप्रतिपादकतासंसर्गेण, चमत्कारत्वविशिष्टत्व'' मित्युक्तम्। तच्च सत्पुरुषसमाश्रितत्वादिना सत्काव्यमिति व्यपदिश्यते, यथा रामायणादि। तच्च काव्यं दृश्यश्रव्यभेदेन द्विविधम्, उत्तममध्यमाधमभेदेन प्रत्येकं त्रिविधम्। व्यङ्ग्यस्य प्राधान्ये उत्तमम्, अप्राधान्ये मध्यमम् अस्फुटत्वे अधममिति।

श्रवणमात्रेणानन्दानुभवजनकानि श्राव्यकाव्यानि, तानि च गद्यपद्यतदु-भयात्मना त्रिविधानि। सपदि चक्षुश्श्रवणयोराल्हादकानि, नैकरसभाव-भासुराणि, नटैरभिनेयार्थानि दृश्यकाव्यानि। एतानि श्राव्यकाव्येभ्यः प्रबलानि। अत एव 'नाटकान्तं साहित्य' मिति प्राचां प्रवादः। तत्रापि गभीरभावगर्भितं ललितपदकदम्बमण्डितं लौकिकन्यायोपबृंहितं, सहृदयहृदयानन्दि काव्यमेव रामणीयकमावहति। एतादृशकाव्यनिर्मातारः, अद्भुतप्रतिभाशालिनः लौकिक-व्यवहारज्ञा अनितरसाधारणमेधाविनः समस्तवस्तुस्वभावज्ञा एव भवेयुः। अत एव ते विरलाः। भोजमहाराजसंसदि कालिदासप्रभृतयः नैकाः कविमणय आसन्निति श्रूयते ''धन्वंतरिक्षपणकामरसिंहशंकु, वेतालभट्ट घटकर्पर कालि-दासाः–ख्यातो वराहमिहिरो नृपतेस्सभायां रत्नानि वै वररुचिर्नव विक्रमस्य'' इति विक्रमादित्यभूपालसभागतत्वं कालिदासस्य प्रतीयते। अत्रात्यविक्रमादित्यः भोज इति तत्सभालङ्कार एव कालिदास इति विमर्शकानामाशयः। तेषु कविषु अग्रगण्यः कालिदासः। 'पुरा कवीनां गणनाप्रसंगे कनिष्ठिकाधिष्ठितकालि-दासा। अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूवे'' ति प्राचां प्रवादः। एतत्तदीयानां कृतीनामवलोकनेन दृढीभवति। भवभूतिप्रभृतयोपि कविवराः काव्यं विरचय्य कालिदासानुमोदनेनैव तदीयसरसतामज्ञासिषुः। उत्तररामचरिते चित्रावलोकनव्याजेन श्रीसीतासमयोः विहारवर्णनपरेण कविना 'किमपि किमपि मन्दम्' इति पद्यचतुर्थचरणे 'रात्रिरेवं व्यरंसी' दिति ग्रथि-तम्। तदवलोक्य कालिदासस्तु – आरात्रिभाषणादिज्ञापकं 'रात्रिरेवं व्यरंसी'

दिति कथनम् अस्वरसं मन्वानः रात्रिरेव गता, भाषणादीन्यवशिष्टानीत्यर्थकं 'रात्रिरेव व्यरंसीदि' ति पाठं साध्विति ज्ञापयन् 'एव' मित्यनुस्वारानुस्वारस्यमुद्घोषितवानिति च किंवदन्ती । इतरकविप्रबन्धेभ्यः अस्य कृतिषु प्रतिपदं गाम्भीर्यं, लालित्यं, लौकिकव्यवहारादयः बहुला उपलभ्यन्ते । अनेन प्रणीतश्राव्यकाव्येषु प्रथमं "रघु" वंशा भिधं काव्यम् । इदं सुरभारतीसंसेवनलालसानां सुगमतया काव्यार्थबोधकललितपदमण्डितं वर्तते । अत्र कविः— स्वाहंकारखंडनं सूर्यवंशजनृपाणां प्रभावं च वर्णयन् स्वस्य विनयातिशयमाविष्करोति । इदं काव्यं 'नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णन' मिति महाकाव्यलक्षणोपेतम् । उपमारसिकस्य कालिदासस्य उपमारासिक्यमस्मिन्नुत्पश्यामः । अत्र आदिकविवाल्मीकिमुनिपुंगवप्रथितरामायणकथां कौशिकीवृत्या लोकोपकारायोपदिशति । एवमयं स्वस्य वस्तुस्वभाववर्णनचातुर्यमपि प्रादर्शयदत्र । कानने अनिलेन पूरितानां वेणूनां ध्वनिकरणं स्वभावः । तत् 'स कीचकैर्मारुतपूर्णरंध्रैः कूजद्भिरापादितवंशकृत्यम् । शुश्राव कुञ्जेषु यशःस्वमुच्चैरुद्गीयमानं वनदेवताभिः' इति वनदेवताकर्तृकस्वीययशोवर्णनमजानाद्दिलीप इत्यवर्णयत् । द्वितीयम् ऋतुसंहारकाव्यम् इदं च षट्सर्गात्मकं शृंगारैकप्रधानम् । अत्र विरहिणां विलापाः, कामातुराणां चेष्टाः, सुखिनां संल्लापा वर्णिताः । इदंकाव्यपठनेन को वा समनस्कः, आनन्दतुन्दिलो न भवेत् ? । तृतीयं 'कुमारसंभवम्' नामांकनेनैवेदं काव्यं कुमारोत्पत्तिप्रतिपादकमिति ज्ञायते । पुरुहूतप्रमुखनिर्जरगणाः तारकपीडां सोढुमशक्नुवन्तः सरसिजासनाभ्यनुज्ञया गिरिजाजानिजनितकुमारेण भावुकमाकांक्षमाणाः पिनाकिनमस्मिन्कार्ये प्रवर्तयितुं मीनकेतनं प्राहिण्वन् । सोऽपि तदीयललाटतटनेत्रानलदग्धवपुः आयुषोऽन्तमुपागमत् । ततः चिरकालफलमूलभक्षणादिसेवाकर्शितचारुकलेवराम् आत्मैकपरायणां गिरिजामवलोक्य तदीयतपः परितोषितचेतास्तत्परिणयनेन तया सह बहुकालं रेमे इति उमामहेश्वरयोर्विरहमवर्णयदस्मिन्कविवरः । 'मेघदूतं' चतुर्थं काव्यम् । स्वाधिपतेश्शापेन प्रियविरहानलदंदह्यमानमानसो यक्षः प्रियायै वार्तानिवेदनाय जलधरं ययाचे इति वर्णयन्

कामार्तानां चेतनाचेतनेषु विवेकहीनतामसूचयत् । अस्मिन्सहृदयानां हृदयानि गगनपथमारोपयिष्यन् मेघेनैव साकमलकां प्रहिण्वन् तत्रनायिकावस्थादर्शन-जनितशोकाकुलानि ततो विप्रलम्भे लीयमानानि च करोति । सर्वेऽपि स्वकाव्ये महाकाव्यत्वनिमित्तं चन्द्रोदयसलिलक्रीडादिकं निरूपयन्तोऽपि नायकमुखेन न वर्णयन्ति । अयं पूर्वोक्तं निखिलमेव नायकमुखतः वर्णयित्वा अत्यद्भुतानन्दमनु-भावयति रसिकानाम् । प्रकृतमेघसंदेशे नायकमुखेनैव नायिकाऽवस्थादिकं यद्वर्णयत्तदतीव शोभामावहति ।

शृंगारमयेषु विक्रमोर्वशीयप्रभृतिषु दृश्यकाव्येषु शाकुन्तलाभिधानं नाटकं प्रधानभूतम् । अत एव प्राचां प्रवादः—"काव्येषु नाटकं रम्यं तत्र रम्या शकुन्तला । तत्रापि च चतुर्थोऽङ्कः तत्र श्लोकचतुष्टय"मिति । नाटकेऽस्मिन्मुख्यो रसः शृंगारः, तदनुरोधेन रसान्तराणि तत्रतत्र प्रवेशितानि । धीरोदात्तो नायकः, प्रख्यातमितिवृत्तम्, महाभारतकथा अत्र संग्रहीता । धीरोदात्तनायके महाभारतोक्तविस्मरणरूपदोषमारोपयितुमसहमानः विस्मरणे दूर्वासश्शापं निमित्तीकृत्य चमत्कारानुगुण्येन कथां तत्रतत्र अन्यथा पर्यवर्तयत् । प्रयोगार्हं प्रेक्षावतां दर्शनादिमात्रादाल्हादकरं भाषा-व्युत्पित्सूनां व्युत्पत्तिकरम् अस्मान्नान्यदस्ति दृश्यप्रबन्धेष्विति विदुषां मतम् । अत्र चतुर्थोङ्कः, तत्र श्लोकचतुष्टयं रम्यामिति विवेचकानामाशयः । "यास्यत्यद्य" तिपद्यं प्राथमिकम् । अत्र कविः गृहस्थानां भर्तृप्रतिगृहं प्रस्थितस्वीयतनया-विरहसमुद्भूतदुःखम् असह्यं, तत्र स्नेह एव कारणमिति लोकानुभूतं निरूपित-वान् । द्वितीये - "पातुं न प्रथमे" ति पद्ये "पिता रक्षति कौमारे भर्ता रक्षति यौवने" इति न्यायेन पतिगृहगमनोद्यतायाः शकुन्तलायाः, आश्रमस्थ-वृक्षाद्यनुज्ञाप्रदानसूचनव्याजेन स्त्रीणां पितृगृहवासप्रकारः यौवने पतिगृह-गमनादिकं च असूचयत् । तृतीये —'अस्मान्साधु' ति पद्ये दुष्यन्ताय स्वीयादेशनिवेदनच्छलेन जामातुः स्वीयपुत्रिकाविषये अव्याजस्नेहकरणादि-निवेदनं लोकसिध्दं संगृहीतम् । चतुर्थे—"शुश्रूषस्व गुरून्" इति श्लोके भर्तृनिकेतनप्रस्थानोद्यतायाः शकुन्तलाया उपदेशव्याजेन पित्रोस्स्वीयपुत्रिकोपदे-शप्रकारं तस्य आवश्यकतां पतिगृहे स्त्रीणां वर्तनादिकं च न्यवेदयत् । लोकानुभूतवस्तुवर्णनपरपद्यचतुष्टयं रम्यमिति पण्डितप्रकाण्डानां प्राचामनुमोदः ।

अलमतिविस्तरेण । एतादृशमञ्जुलतररसपुञ्जमञ्जुकवितारकरणविस्मापित-विद्वत्समूहस्य कविकुलललामभूतकालिदासमहाकवेः कविताकौशल्यं अनितर-साधारणमिति मुक्तकण्ठमुद्घोषयितुं प्रभवाम इति सर्वमनवद्यम् ॥

---

# श्रीकालिदासकृतो व्यवहारोपदेशः

( ले. शेंडे गणेश शास्त्रिणः ' व्याकरणकोविदाः ' पुणे )

अयि मान्याः नानाशास्त्रनदीष्णाः वाचकवरेण्याः ! योऽयं कालिदास-विषयकः अंकः मधुरवाणीप्रचालकैः प्रकाश्यते, तत्र कालिदासविषयकं किमपि लेखनीयम् इति कविकुलगुरोः कालिदासस्य गुणा एव कर्णम् आगत्य कथयन्ति । तथापि एतावन्तं कालं यावद् एकां पङ्क्तिम् अपि नाहं कुत्रापि व्यलिखम् । तथापि वृक्षम् अनारूढः आरोढुं न शक्नोति, जलपतनात् प्रागेव तरितुं न शक्नोति इति सूक्तिं मनसि निधाय किंचिदिव लेखने प्रयते । तत्र हंसक्षीरन्या-येन वाचकाः दुग्धमेव गृण्हन्तु इति प्रथमतः प्रार्थये ।

' काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कांतासंमिततयोपदेशयुजे' एवं प्रयोजनवद् यत् तदेव काव्यम्, अन्यत् सर्वं बाल-प्रलपनम् । अत्रापि व्यवहारवित्त्वम् अयमेव काव्यस्य मुख्यो गुणः, यतः तेनैव अन्यान् सर्वान् अपि गुणान् संपादयितुं समर्थो भवति पुमान् । अतः स्वकीये काव्ये भगवान् कालिदासः अमुमेव गुणं कथं पुपोष तद्वयं विमृशामः ।

## नम्रता १

श्रेयस्कामेन पुरुषेण सर्वत्र सर्वदा विनम्रेण भाव्यम् । अन्यथा पुरुषार्थ-सिद्धिः नैव जायते । अमुमेव व्यवहारमुपादिशन् प्रथमतः स्वकीयां विनम्रतां प्रदर्शयति ' क्व चाल्पविषया मतिः ' इत्यादिभिः पद्यैः । कालिदाससदृशस्य

महाकवेः रघुवंशवर्णनं नाम कियती मात्रा, तथापि 'नालसाः प्राप्नुवन्त्यर्थान् न क्लीबा नाभिमानिनः' इतिसूक्तिं जनान् शिक्षयितुमेव स्वकीयां नम्रतां प्रादर्शयत्

## कृतज्ञता २

अयमपि सर्वोत्कर्षसाधको गुणः, यदभावे पुरुषस्य सर्वेऽपि मृत्साद्भवन्ति गुणा इति शिक्षयितुकामः कविः 'अथवा कृतवाग्द्वारे' इति कृतज्ञतादर्शकं पद्यं व्यरचयत् । श्रीवाल्मीकादिभ्यः ऋषिभ्यः संप्राप्तमेव ज्ञानम् अहं ग्रंथरूपेण निबध्नामि इति कथयता कविना व्यवहारद्वयमपि उपदिष्टम् । एका कृतज्ञता, अपरं यद् यद् वक्तव्यं तत् सर्वमपि प्रमाणशृंखलाबद्धम् अपेक्ष्यते इति ।

## श्रद्धा ३

श्रद्धा नाम पुरुषस्य अत्यावश्यकी ऐहिकं पारलौकिकं च सुखं संपादयितुम् । यतः श्रद्धावानेव पुरुषः आफलोदयं कर्म कर्तुं शक्नोति । श्रद्धायाः अभावे तु अद्य एकं श्वः एकं परश्वः एकम् एवं विदधानः पुरुषः कस्यापि कर्मणः फलं नाप्नोति । अतः 'श्रद्धावान् लभते ज्ञानम्' इति श्रीभगवता उक्तं गीतायाम् । तथाच 'अश्रद्धा परमं पापं श्रद्धा पापप्रमोचनी । जहाति पापं श्रद्धावान् सर्पो जिर्णामिव त्वचम्' एतादृशि श्रद्धास्तावकानि बहूनि किल वर्तन्ते वाक्यानि । परंतु एतादृशी इयं श्रद्धा किंस्वरूपा अपेक्ष्यते एतत् भगवान् कालिदासः एकया रम्यया उपमयैव उपादिशत् । सा यथा 'श्रद्धेव साक्षात् विधिनोपपन्ना' । श्रद्धा यदि विधियुता भवेत् तर्ह्येव सा महते कल्याणाय कल्पते, नान्यथा । कश्चन यदि महत्या श्रद्धया प्रतिदिनं शतशो ब्राह्मणान् ऐरण्डतैलं पाययेत् तर्हि किं स दानफलमाप्नुयात् न हि । यतः अस्मिन् कर्मणि कोऽपि विधिर्नास्ति, अतः विधियुता एव श्रद्धा फलदायिनी भवति ।

## कर्तव्यनिष्ठा

कर्तव्यनिष्ठा एव स्वर्गावगाहियशःसंपादको गुणः । एतावत्कालपर्यन्तं ये ये कीर्तिमंतः पुरुषाः समभूवन्, ते ते सर्वेऽपि कर्तव्यनिष्ठा एव आसन् । कर्तव्यनिष्ठतायाः अभावे यशसः संप्राप्तिर्नैव जायते । अयमेव व्यवहारः रघु-

वंशस्य द्वितीयं सर्गं वितन्वता कविना साधूपदिष्टः। यद्यपि सिंहः बहुभिः वाक्यैः राजानं विलोभयितुं प्रायतत, तथापि तानि सर्वाण्यपि विलोभनानि तृणीकृत्य केवलं यशः संपादयितुकामः राजा सिंहं व्यजिज्ञपत्। 'अये! एभिः प्रलोभनैः त्वं मां कर्तव्यपराङ्मुखं मा कुरु, यतः पुरुषेण कर्तव्यनिष्ठतया यशः एव संपादनीयम्। अतः यदि त्वं दयालुरसि, तर्हि मे यशश्शरीरे एव दयालुर्भव'। यतः यशसो नाशे सर्वमपि विनष्टमेव। देहनाशनात् यशोनाशनमेव दुष्करम् इति हेतोः 'उपानयत् पिण्डमिवामिषस्य'। यथा कस्यचित् मांसपिण्डमानीय सिंहस्य पुरतः स्थापनीयः तादृगेव स्वं देहं समर्पयन् राजा कर्तव्यनिष्ठतायाः परां कोटिमगात् किल।

## वाचि क्रियायां च एकरूपता

येषां वाचि क्रियायां च एकरूपता वर्तते ते एव नेतृपदम् अलंकर्तुं योग्याः, अन्यथा तेषां तन्नेतृत्वम् उपहास्यतां याति, जनाः तान् पदेपदे अवमन्वते। अतः वाचि क्रियायां च एकरूपता स्थापनीया। अमुं व्यवहारं श्लोकार्धेन कविः उपादिशत्। यथा-'पथः श्रुतेर्दर्शयितार ईश्वरा मलीमसामाददते न पद्धतिम्'।

## दानम्

दानं नाम पुरुषस्य नितान्तं भूषाकरं कीर्तिकरं च। दानं विना पुरुषः न शोभते। यत्र यत्र येषां नामधेयानि वयं श्रृणुमः तानि तानि प्रायः दानभूयस्त्वेनैव। 'सर्वेष्वपि हि शूरेषु दानशूरो विशिष्यते'। श्रीमतां होळकरमहोदयानां कुले बहवः पुरुषाः बह्व्यः स्त्रियः च समजायन्त, परंतु यस्याः नामधेयं सर्वेषामपि मुखे विलसति, एतादृशी प्रथितनामधेया प्रातस्स्मरणीया, आसेतुहिमाचलं स्वां कीर्तिं प्रतिष्ठापयन्ती एका अहल्यादेवी एव, नान्या काचन। केन वा गुणेन इमां कीर्तिम् इयमाप्नोत् तर्हि केवलं दातृत्वगुणेनैव। यस्मिन् कस्मिन्नपि क्षेत्रे गंतव्यम्, अस्याः धवला कीर्तिः तत्र विराजते एव। विश्वजिदध्वरे यद्दानं तद् दानस्य परा किल काष्ठा। यतः सर्वस्वदानाद् अधिकं दानं भुवि नास्ति। तथापि ततोप्यधिकं यत् सविधे वर्तते इति ददाति एवं नहि, तर्हि केवलं अतिथिसत्काराय यद् सविधे नास्ति तदपि दातुं प्रयतमानं राजानं वर्णयन् कविः सदा दानशीलेनैव पुरुषेण भाव्यम् इत्येव अशिक्षयत्।

## पित्राज्ञापालनम्

पित्राज्ञापालनम् एतत्तु पुत्रस्य मुख्यम् कर्तव्यं 'जीवतो वाक्यकरणाद् मृताहे भूरिभोजनात् । गयायां पिंडदानाच्च त्रिभिः पुत्रस्य पुत्रता' । यश्च पुत्रः पितुराज्ञां पालयति स एव पुत्रः । 'पितुर्वचनमुल्लंघ्य स्वतंत्रो यस्तु वर्तते । स पुत्रो मल उच्यते' । पित्राज्ञापालने श्रीरामसदृक्षः पुत्रः भुवि नास्त्येव । यतः राज्यलाभप्रसंगे वनलाभप्रसंगः समागतः, तथापि महता संतोषेण तदाज्ञायाः स्वीकरणं । न ह्येवमासीद् दुर्बलो रामः यदि तां आज्ञां न स्वीकुर्यात् तर्हि तदानीं किं कर्तुं शक्नुयात् ।श्रीरामः समर्थः किल आसीत् । लक्ष्मणेन तु स्पष्टमेव उक्तम् 'अयि राम ! स्त्रीजितस्य दशरथस्य आज्ञां स्वीकृत्य त्वं वनं गच्छसि नैतत् रुचिरम् । वयं क्षत्रियाः स्मः । युद्धं कृत्वैव राज्यं गृण्हीमः, सैन्यं नास्ति इति ब्रूषेचेत् तर्हि अहम् एकः एकत्र अपरत्र सर्वं त्रैलोक्यं भवतु, तथापि तज्जेतुम् अहं समर्थोऽस्मि' । तथापि रामेणोक्तं-नैतत् युक्तम् ।अहो 'आज्ञा गुरूणां ह्यविचारणीया' अतः अस्माकं एतदेव मुख्यं कर्तव्यं यत् पितुराज्ञापालनम् । अतः कविना वर्णितम् 'पश्चाद् वनाय गच्छेति तदाज्ञां मुदितोऽग्रहीत्' । आज्ञा स्वीकृता, सापि महता मोदेनैव, नतु कथंकथमपि दुःखेन ।

## ६ यशः

पुरुषेण अस्मिन् जन्मनि यथा द्रव्यादिकं संपादनीयं वर्तते, ततोप्यधिकं यशस्संपादनं नाम पुरुषस्य मुख्यं कर्तव्यम् । यतः शरीरं द्रव्यादिकं च सर्वमपि अनित्यम् । परंतु यशस्तादृशं नास्ति । तत्तु यावत् चंद्रदिवाकरौ तावत्तिष्ठति इतितु सर्वेषां प्रत्यक्षम् । अतः शरीरं द्रव्यादिकं च परित्यज्य यश एव संपादनीयम् । पुरुषस्य मरणं मरणं नहि, किंतु तस्य अकीर्तिरेव मरणम् । अतः सर्वं परित्यज्य यश एव संपादनीयम् । अमुं व्यवहारं उपादिशत् कविः । 'अपि स्वदेहात् किमुतेन्द्रियार्थात् यशोधनानां हि यशो गरीयः' 'यशःशरीरे भव मे दयालुः' इत्यादिभिः पद्यैः । यतः यशः ह्रापयित्वा शरीरेण द्रव्यादिना वा किमपि साध्यं नास्ति ।

## पतिव्रताधर्मः

सर्वेष्वपि धर्मेषु दुष्करः किल पतिव्रताधर्मः। पातिव्रत्येन यन्न साध्यते एतादृशम् ऐहिकं पारलौकिकम् किमपि फलं नास्ति। प्रतिकूलेऽपि भर्तारं आर्यया पतिपरायणया कथं वर्तितव्यम् एतत्तु साधु वर्णितं किल कविना। आर्या जगन्माता सीता वृजिनादृतेऽपि निराकरिष्णुं पतिं न निनिंद, किंतु जन्मप्रभृति दुःखभाजं आत्मानमेव निनिंद। यतः पत्युर्निंदा न विधेया न श्राव्या च। ततोप्यधिकं मनसः शांतिं विधाय लक्ष्मणम् अपि प्राब्रवीत् सीता-'त्वमपि चिरं जीव, उतच गृहं गत्वा श्वश्रूः मत्प्रणामं वाचयित्वा मदुदरस्थगर्भस्य शिवं चिंतयत इत्यपि निवेदय। श्रीरामं प्रत्यपि निवेदय-'नाहं ते मम त्यागरूपं कामचारं वेद्मि, किंतु मम जन्मान्तरपातकानां विपाकोऽयम्'। अहो धन्या खलु पतिव्रता, अन्यथा त्यजन्तं भर्तारं का वा एवं ब्रूयात्। अपरमपि प्रार्थ्यते 'तपस्विसामान्यमवेक्षणीया'। अहो एतत् सर्वमपि केवलं पतिव्रतायाः एव सुकरं नान्यासाम्। अनेन सर्वेणापि पतिव्रताव्यवहारम् उपादिशत् कविः

## चरमे आयुषि कथं वर्तितव्यम्

प्रायः सर्वेषामपि नृणां चरमम् आयुः दुःखसाद्भवति इति तु सर्वेषामपि प्रत्यक्षम्। तस्य कारणं तु इत्थम्, शरीरस्य क्षीणत्वेऽपि आशायाः क्षीणता नैव जायते। विकलीभूतान्यपि दन्तादीनीन्द्रियाणि पुनः पुनः संयोज्य आशाधीनः पुरुषः पूर्ववत् सुखम् आप्तुं ईहते। नैव विषयेभ्यः विरक्तो भूत्वा तान् त्यक्तुं अभ्यस्यति। तेनच सर्वत्र वृद्धा दुःखभाजः एव। अतः शरीरेण सार्कं भोगाशायाः येषां क्षीणता तेनच वैराग्यम्, ते एव सुखिनो भवन्ति। अमुमेव व्यवहारम् उपादिशत् कविः 'स किलाश्रममन्त्यमाश्रितो निवसन्नावसथे पुराद्बहिः। समुपास्यत पुत्रभोग्यया स्नुषयेवाविकृतेन्द्रियः श्रिया। अनेन पद्येन एवम् आचरन् पुरुषः चतुर्थं मोक्षरूपं पुरुषार्थम् एव आप्नोति। ततः दुःखेन न लिप्यते। इतिशम्।

# श्रीकालिदासविरचितग्रन्थानामुपादेयता

( ले. पं. सीतारामशास्त्री एम्. ए. बनारस हिंदुयुनिव्हर्सिटी )

अयि विद्वद्वन्द्या महाभागाः ! सुविदितमेव किलात्रभवतां शेमुषीजुषां विपश्चिदपश्चिमानां ग्रंथः स एवोपादेयत्वेनाद्रियेत सुधसदि, यः पठनकाल एव रसास्वादजं विगलितवेद्यान्तरमानन्दं जनयितुं सुशकः । तत्रापि स विदुषामविदुषामविशेषतः सममेव चेतांसि चिरं रञ्जयितुं कल्पेत । महाकविकालिदासादिविरचितकाव्यनाटकादीनि तादृग्विशिष्टगुणगणमण्डितानि सन्ति न वेत्यत्र सहृदयाः साहितीरससारसमाकलनकुशला एव प्रमाणम् । प्रमाणभूतं वस्तु विमर्शपदवीं नावतार्यमिति न वाच्यम् । यतः प्रमाणतमेऽपि वेदे श्रोतव्यो बोद्धव्यो मन्तव्यो निदिध्यासितव्यश्च भवत्येव परमात्मा एवमिहापि कालिदासग्रथितवस्तु साक्षात्कृतमपि पुनः श्रवणमनननिदिध्यासनोपायैः पानकरसमिश्रास्वादयोग्यतां नेतुमपेक्ष्यत एव । तत्र वस्तुनि द्वे महाकाव्ये रघुवंशकुमारसंभवाख्ये, खण्डकाव्येष्वेकमेव मेघदूताह्वम्, अभिनयपदमधिक्रियमाणं नाटकत्रयं मालविकाग्निमित्र-विक्रमोर्वशीयाभिज्ञानशाकुन्तलाभिधं च समन्वितानि। सुरभारतीपरिचयं बिधित्सवो बालाः कालिदासरचितमहाकाव्यं रघुवंशाख्यमेव समाश्रयन्त इति सुविदितमेवास्माकं समेषाम् । सुरभारतीसिषेविषूणां मध्ये विरला एव सुधियो भवन्ति येषां रघुवंशमहाकाव्यं नातीव परिचितम् । कति वा कोविदाग्रसरास्तत्काव्यव्याख्यानिर्माणे बद्धपरिकरा नासन् । श्रीमल्लिनाथसूरिविरचिता सञ्जीविनीव्याख्या अखिलविचक्षणपरीक्षणक्षमा सम्भूयान्तेसर्वैरपि लब्धवर्णैर्मौलिकतामापादिता ।* सोऽयं कृती कोलाचलमल्लिनाथस्त्रिलिंगदेशवासीयः खृष्टाब्दीयचतुर्दशशतकमध्यवर्तीति पुरातत्त्वान्वेषकाणामैतिह्यसमयः । तत्पूर्ववर्तिनस्तु व्याख्यातारस्तस्यैव काव्यस्यानल्पा न बभूवुरिस्यपि

---

* मल्लिनाथोऽयं कर्णाटके 'गजेन्द्रगड' नामकनगरवास्तव्य इति अधुनाऽपि तत्र तद्वंशीयजननिवासेन ज्ञायते । संपादकः

न। शर्मण्यदेशीयबुधीनिर्मितगीर्वाणवाणीग्रन्थतत्कर्तृसूचीपत्रे (Aupecht-catalogus catalogorum) अष्टादशावराणां टीकाकृतां नामान्युल्लिखितानि सन्ति। प्रायेण सर्व एव ते विद्वद्भूयिष्ठाः। बहूनां तेषां व्याख्याग्रन्था मल्लिनाथसूरेर्लोचनगोचरतामापतिताः स्युः। एतदनुमापकं वचनं स्वयमेवोल्लिखति मल्लिनाथः स्वटीकायाः प्रस्तावपद्येषु — 'भारती कालिदासस्य दुर्व्याख्याविषमूर्च्छिता। एषा सञ्जीविनी टीका तामद्योऽज्जीवयिष्यति' इति। दुर्व्याख्यापदेन किमत्र बोद्धव्यं भवेत्। पण्डिता अपि कालिदासवचांसि सम्पूर्णतयाऽऽकलयितुं समर्था नासन्निति?। तदेव विशदीकरोति सञ्जीविनीटीकाकृत् पूर्वस्मिन्प्रस्तावपद्ये तत्रैव — 'कालिदासगिरां सारं कालिदासः सरस्वती। चतुर्मुखोऽथवा ब्रह्मा विदुर्नान्ये तु मादृशाः इति।

विद्वदग्रेसरोऽयं मल्लिनाथः केवलं कविरेव नासीत्, प्रत्युतानेकशास्त्रपारंगतोऽपि। कणादाक्षपादजैमिनिपातञ्जलदर्शनेषु कृतभूरिपरिश्रमश्च। कालिदासविषयकोऽस्यैतादृगादरः। तं स चतुराननचतुरं सरस्वतीकृतरसनाग्रवसतिं वा मन्यते। उक्तं च जयदेवेन 'कविताकामिन्याः कविकुलगुरुः कालिदासो विलासः' इति। बाणोऽप्येनं स्तौति 'निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु। प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते' इति। न तच्छास्त्रं न सा कला दृश्यते या कालिदासेन नाकलिता स्वीयग्रन्थेषु च नोपनिबद्धा। 'किमिव हि मधुराणां मण्डनं नाकृतीनाम्' इत्येषोक्तिस्तस्य स्वग्रन्थेष्वपि समानमेवोपचरति। काव्यविच्छित्तिरपि तत्रैवाध्येया। सकलशास्त्रदर्शनसारं, कलाज्ञानं तन्निधिं च स्वकृतिषु निवेशयित्रा तेन कविमूर्धन्येन समेषां सुधियामसुधियामपि प्रीतिभाजनतामात्मा स्वभणतयश्च नीताः। कालिदासस्य न वागेव मधुरा, किन्तु वाग्विषयीभूतं वस्तु तत्प्रदर्शनसरणिश्च नेपथ्यविधानेन तत्सर्वमेवैकान्ततो रमणीयम्। तेन कविनैतद्देशनिवासिनामेव हृदये दृढं पदं कारितमिति न, प्रत्युतान्यदेशवासिनामपि मनसि। युरोपस्थजगद्विख्यातकविर्गेटे नामकः स्तौति कालिदासस्य कृतिमभिज्ञानशाकुन्तलमुपलभ्य,

नतुमूलतः, किन्तु स्वजनपदभाषान्तरितं तदेव पठित्वाऽऽनन्दसन्दोहसागरे सर्वात्मना निमग्नः। अन्येऽपि बहवः पाश्चात्यविपश्चितोऽप्येनं मुक्तकण्ठं स्तुवन्त्येव। अस्य काव्यनाटकेषु सर्वत्रालङ्कारकोविदैः परिगणिताः सर्वे गुणा दोषवर्जितास्तत्रतत्र साधूपनिबद्धाः सन्दृश्यन्ते। माधुर्यप्रसादगुणयोराचार्य एवायं कविः। सर्वेऽप्यष्टविधा नवविधा वा रसाः नातिगूढव्यञ्जनाव्यापारेण कामपि कमनीयतामुल्लास्य श्रोतृदर्शकपाठकानां मनांसि तन्मयतां नीत्वा तानि सद्यः स्वानन्दसागरे निमज्जयन्त्युन्मज्जयन्ति च। त्रिभुवनगुरुस्मरहरदाशरथी आरभ्य क्षुद्रदासदासीधीवरादिसमस्तोदात्तनीचस्वभावानि पात्राणि पदमभिनयस्य लम्भयित्रा तेन निखिलजनताजनार्दनस्य कीदृगाराधनं वा न कृतम्। कथितमस्ति स्वेनैव मालविकाग्निमित्रनाटकस्य प्रस्तावे—

देवानामिदमामनन्ति मुनयः कान्तं क्रतुं चाक्षुषम्
रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा।
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते
नाट्यं भिन्नरुचेर्जनस्य बहुधाऽप्येकं समाराधनम्॥

महाकाव्यं रघुवंशाख्यं निर्मिमाणेनानेन कविसम्राजा तत्प्रयोजनं सुष्ठु सन्दर्शितमग्रे—'सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम्। आसमुद्रक्षितीशानामानाकरथवर्त्मनाम्॥ यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम्। यथापराधदण्डानां यथाकालप्रबोधिनाम्॥ त्यागाय सम्भृतार्थानां सत्याय मितभाषिणाम्। यशसे विजिगीषूणां प्रजायै गृहमेधिनाम्॥ शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम्। वार्द्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम्॥ रघूणामन्वयं वक्ष्ये' + इत्यादिना। तत्र राज्ञामितरेषामपि जन्मतः वंशविशुद्धिः कवेरभिमता याऽधुना विरलमुपलभ्यमाना प्रतीयते। ते च राजानः सागराम्बरां पृथ्वीं शशासुः, तथाच सम्राड्पदमेव सदा भेजिरे। अङ्गीकृतकर्माण्यसमाप्य कदापि विरता न बभूवुः। तेषां रथानां गतिर्न तु केवलं महीमण्डले, प्रत्युत-स्वर्गद्वारपर्यंतमप्यकुण्ठिताऽऽसीत्। तैरग्निहोत्रहोमा यथाविधि निर्वर्तिताः।

अर्थिनस्तु तेषां सकाशात् सकलमेवार्थितं लब्ध्वा कृतकृत्या आसन्। अगस्कृतः कदाप्यदण्ड्या नासन्। कार्यावसरः प्रजागरवेला च तैः स्वप्नेऽपि नातिक्रान्ता। पराक्रमार्जितं धनं सत्पात्रेषु विश्राणितम्। सर्वे नराधिपाः सत्याप-लापभयान्मितभाषिणो बभूवुः। यशोधना भवितुमेव महीं विजिगीषवो न तु द्रविणसञ्चयार्थम्। सन्ततिकामैस्तैः पाणिग्रहः स्वीचक्रे। सर्वे ते राजानः शैशव एवाभ्यस्तविद्याः। यौवनं प्राप्य विषयसुखान्युपबुभुजिरे। प्रवयस एव मुनीनां वृत्त्या ववृतिरे। योगबलेन देहं विससृजुः। एवं राजवर्णनमिषेणेह संसारेऽभ्युदयस्योत्कटकोटिमुपलभ्य जीवितमात्रमानन्दरूपे कथंकारं पारिण-मयितव्यमिति, तथाऽभ्युदयोऽपि निःश्रेयस्याविरोधी एवेति ज्ञापयितुमेव मन्ये कविनाऽऽस्मा ग्रन्थरचनाकौशले एवं प्रयासितः। अन्यथा चतुर्वर्गसारभूत सकलशास्त्रप्रमेयानि कान्तासम्मितयोपदेशयुजे, सद्यः परनिर्वृतये, च यशसेऽर्थ-कृते, व्यवहारविदे, शिवेतरक्षतये काव्ये तस्मिन्निवेश्य कथं कुतो वा तद्ग्रथितवान् सः। विचक्षणपाठकानामेतत्पुनर्नाविदितं यच्छब्दव्यापारो व्यञ्जनावृत्ति-माश्रित्यैव चेतश्चमत्कृतिं विदधातीति। कविरयं तद्व्यापारेऽतीवपटु। निखिल-वर्गेषु कामपुरुषार्थ एव निखिलप्राणिगणमनःकान्तो धर्मार्थावनुज्झित्वैव सम्पाद्य इति मनीषां हृदि निधायैव तेन स्वग्रन्था रचिताः स्युः। स्वाभि-लाषानुरूपमेव ते ग्रन्थाः संवृत्ता इत्यत्र सहृदया एव प्रमाणम्। तथैव ते काव्य-नाटकनिषेविणां स्वान्तं नितान्तं सन्तर्पयन्तीति स कविः सर्वेषां प्रीतिभाज-नम्। धर्मार्थावनुसरन्काम एव सर्वथा प्रशस्यः। स चाभिलषणीयश्च सर्वैः। स च भगवतो रूपम्। यथा चोक्तं गीतायां भगवतैव स्वयम् – 'धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ' इति।

महाकविरयमिह जगति जनमखिलं कामोपहतचेतसमवलोक्य तदीयाभीष्टविषयप्रतिपादनपरो भूत्वा यावल्लोकमनोविनोदं विधातुकामः कान्ता-सम्मितया सरण्या जनानां सर्वाङ्गीणामभिवृद्धिं कामपुरुषार्थमूलेतरसर्वार्थ-संसिद्धिद्वारेणैव दर्शयितुकामः कारुणिकः परोपकाररतश्च बभूव सः। धर्मा-

विरोधिकामस्य प्रशीशासिषुरयं कविः स्वीयग्रन्थेषु कानि शास्त्राणि नोपनिबध्नाति । यदा हिमाद्रितनया सकलसुरगुरुमीशानं पतित्वेनावाप्तये तपस्यति गौरीशिखरे, तदा ब्रह्मचारिमिषेण स ईशस्तत्रागत्य तां परीक्षितुकामो ब्रवीति- 'अनेन धर्मः सविशेषमद्य मे त्रिवर्गसारः प्रतिभाति भाविनि । त्वया मनो निर्विषयार्थकामया यदेक एव प्रतिगृह्य सेव्यते ' इति । यतः महेश्वरोऽरूपहार्य्यः अतोऽयमुपायस्तस्य वशीकरणे तया चिन्तित आसीत् । सर्वे पुरुषार्थाः काममूला एव । धर्मकामो भूत्वैव धर्मः काम्यो भवति, तथाऽर्थकामावपि मोक्षोऽपिच । इह लोके यच्चापि कार्यं भवति काममूलमेव तत् । अत एवोच्यते कामपुरुषार्थः सर्वत्रानुस्यूतः सर्वमूलश्चेति । यद्येतादृशः कामः स्त्रीणां हृदि पदमादधीत, तर्हि सर्वा एव स्त्रियो जगन्मातर इव पूजनीयाः स्युः ।

कालिदासकवेर्नायका अपि वशिन एव । जितेन्द्रिया राजर्षयश्च । इन्द्रियाण्यवशीकृत्य सुखं दुरवापम् । उक्तंच-'आपदां कथितः पन्था इन्द्रियाणामसंयमः । तज्जयः सम्पदां मार्गो येनेष्टं तेन गम्यताम् ' इति । कालिदासोऽपि वितरति शिक्षामिमामेव । शाकुन्तलनाटकस्य नायको राजा दुष्यन्तः कथंकारं वर्णितस्तेन । यद्यपि शकुन्तलायाः प्रथमदर्शने कामार्तो जायते, तथाऽपि यदा सैव शकुन्तलाऽऽपन्नसत्त्वा भूत्वा तत्सकाशमागमिष्यति पञ्चमेऽङ्के, दुर्वाससः शापवशाच्च राजा तस्या न स्मरति स्वपत्नीत्वस्य, तदा द्रष्टव्योऽस्माभिस्तस्य मनोनिग्रहः । कामसुखेप्सुभी राजभिरपि धर्मार्जनार्थं कथं जागरूकैः सदा भाव्यम् । एतत्सर्वं नाटकोद्धृतवर्णनेनैव विभाव्यम् ।

राजा—[ शकुन्तलां निर्वर्ण्य ] अये! अत्र 'केयमवगुण्ठनवती,
नातिपरिस्फुटशरीरलावण्या । मध्ये तपोधनानां, किसलयमिव
पाण्डुपत्राणाम् ।

प्रतीहारी—भर्तः ! कुतूहलगर्भः प्रतिहतो न मे तर्कः प्रसरति, दर्शनीया पुनरस्या आकृतिर्लक्ष्यते ।

राजा—भवतु, अनिर्वर्ण्यं खलु परकलत्रम् ।

.......................................................................

शार्ङ्गरवः—कुलपतिर्विज्ञापयति यन्मिथः समयाद् इमां मदीयां दुहितरं भवानुपेयेमे तन्मया प्रीतिमता युवयोरनुज्ञातम् । तदिदानीमापन्नसत्त्वेयं गृह्यतां सहधर्माचरणाय इति ।

राजा ( साशङ्कमाकर्ण्य ) अये ! किमिदमुपन्यस्तम । किमत्र भवती मया परिणीतपूर्वा

शार्ङ्गरवः—' किं कृतकार्यद्वेषाद् धर्मं प्रति विमुखतोचिता राज्ञः ?

राजा—कुतोऽयमसत्कल्पनाप्रसङ्गः । शार्ङ्गरवः—[ सक्रोधम् ] मूर्च्छन्ति अमी विकाराः प्रायेणैश्वर्यमत्तेषु । राजा—विशेषेणाधिपक्षिप्तोऽस्मि ।

( शकुन्तलाऽवगुण्ठनमपनयति ) राजा–( शकुन्तलां निर्वर्ण्य स्वगतम् ) ' इदमुपनतमेवं रूपमक्लिष्टकान्ति प्रथमपरिगृहीतं स्यान्नवेति व्यवस्यन् । भ्रमर इव निशान्ते कुन्दमन्तस्तुषारं न खलु सपदि भोक्तुं नापि शक्नोमि मोक्तुम् । [ इति विचारयन् स्थितः ] प्रतीहारी – अहो धर्मापेक्षिना भर्तुः । ईदृशं नाम सुखोपनतं स्त्रीरत्नं प्रेक्ष्य कोऽन्यो विचारयति । शार्ङ्गरवः – भो राजन् ! किमिति जोषमास्यते ? राजा—भोः तपस्विनः, चिन्तयन्नपि न खलु स्वीकरणमत्रभवत्याः स्मरामि तत्कथमिमामभिव्यक्तसत्त्वलक्षणामात्मानमक्षत्रियं मन्यमानः प्रतिपत्स्ये ( शकुन्तलां प्रति )— व्यपदेशमाविलयितुं समीहसे माञ्च नाम पातयितुम् । कूलङ्कषेव सिन्धुः प्रसन्नमोघं तटतरुञ्च ) ( शकुन्तलास्मारितानि वचांस्याकर्ण्य ) आभिस्तावदात्मकार्यप्रवर्त्तिनीभिर्मधुराभिरनृतवाग्भिराकृष्यन्ते विषयिणः । ( शकुन्तलां सरोषामवलोक्य ) राजा –( आत्मगतम् ) वनवासात् आविभ्रमः पुनरस्याः कोपो लक्ष्यते । तथाहि – न तिर्य्यगवलोकितं, भवति चक्षुरालोहितं वचोऽपि परुषाक्षरं, नच पदेषु सङ्गच्छते ॥ हिमार्त्त इव वेपते

सकल एव बिम्बाधरः प्रकामविनते भ्रुवौ युगपदेव भेदं गते ॥ अन्ते च वदति राजा—मूढः स्यामहमेषा वा वदेन्मिथ्येति संशये । दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांशुलः ॥ इति ।

इत्थमयं कविशिरोमणिः सर्वत्रोत्तमनायकानां वशित्वं राजर्षित्वं च ख्यापयति । धर्माविरोधिकामपुरुषार्थस्य सेवनार्थमुत्तमपुरुषैर्वशिभिर्भवितव्यमित्येव तत्रतत्र कवेराशयः । रघुवंशे च - यदाऽयोध्यापुरदेवी कुशसकाशं सुचारुमनोहारिवेषधारिणी ललना भूत्वा रात्रौ शय्यायां स्थितायात्मानं दर्शयति तदा तेन पृष्टा सा – ' का त्वं शुभे कस्य परिग्रहो वा किं वा मदभ्यागमकारणं ते ॥ आचक्ष्व मत्वा वशिनां रघूणां मनः परस्त्रीविमुखप्रवृत्ति' ॥ इति । यद्यपि मालविकाग्निमित्रनाटके धारिणीरावत्योर्महिष्योर्विद्यमानत्वेऽपि राजाऽग्निमित्रो यद्दासीभूतायै मालविकायै स्पृहयति तया सह रहो रमते च, तत्तत्कालप्रचलितराजविलासितामेव बोधयति । तत्तु तत्सामयिकपरिस्थितेरेव वास्तविकं निदर्शनम् । तथापि स राजा दक्षिणोदारादिगुणशाल्येव तत्र वर्णितः । अग्निमित्रस्य मालविकां प्रति य ईदृग्व्यवहारस्तत्रोल्लिखितः कविना, तद्राज्ञोऽत्यन्तानार्यत्वद्योतकमेवेति मतमाधुनिकविपश्चितां तत्र बहूनाम् दृश्यते । अनवसरोऽयमत्र न्याय्यान्याय्यविचारणायाः । कविरत्र वस्तुस्थितिमेव प्रदर्शयतीति नो मतम् । अन्ते च सा मालविका देवीपदेन भूषितेति न विस्मर्तव्यमस्माभिः । मालविकाग्निमित्रं कवेः प्रथमा कृतिः । सा च लोकाराधनायैव प्रणीता । अत्र कविर्लोकरुचिमपि मनसि कृत्वैनादृग्वर्णनपरो भवेत् । तत्र यत्किञ्चिद्गर्हाविषयकं तत्तत्कालवर्त्याचारदोषानेव ख्यापयेत्, नतु कवेर्योग्यतान्यूनत्वम् ।

कामपुरुषार्थस्य परमरहस्यं तु कविनाऽपरमहाकाव्ये कुमारसम्भवे प्रकटीकृतं दृश्यते । तत्रत्यनायकस्तु कर्तुमन्यथाकर्तुं प्रभविष्णुर्जगतां नियन्ता प्रलयकालोपसंहर्त्ता भगवान् महेश्वर एव । कामस्तु तथ्यतस्तेनैवानुभूतो शवीकृतश्च । तस्य धीरतोपवर्णिता कविना – ' प्रत्यर्थिभूतामपि तां ( पार्वतीं ) समाधेः शुश्रूषमाणां गिरिशोऽनुमेने । विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः ' इति । देवेन्द्रानुज्ञया साक्षाद् मदनो वसन्तश्च पार्वतीं पुरस्कृत्य तं कामे प्रलोभयितुं यतेते । वसन्तस्तु तत्राकिञ्चित्कर एव जातः ।

कन्दर्पस्तु भस्मसाद्भूतः। तथा वृत्ते सति पार्वती मनसा स्वरूपं निनिन्द। तथाच साऽऽत्मनोऽवन्ध्यरूपतां विधातुकामा समाधिमातस्थे। तपश्चरणमेव तादृशं तस्य परमोपायं मेने। स्वयं विशीर्णानि यानि द्रुमपर्णानि तैरेव वृत्तिस्तपसः परा काष्ठा। पार्वत्या तु तदप्यपाकीर्णमतः साऽपर्णेत्युच्यते। पञ्चाग्निसाधनं विदधत्यास्तस्याः पारणाविधिः किल केवलमयाचितोपस्थितमम्बु, रसात्मकोडुपतेश्च रश्मय एव बभूव। तदा तपश्चरणसमये शिलाशयाऽनिकेतवासिनी साऽऽसीत् निरन्तरास्वन्तरवानवृष्टिषु तस्या महातपसस्साक्ष्ये स्थिता इव क्षपाः स्वतडिन्मयैरुन्मिषितैस्तस्या अवलोकयित्र्यो बभूवुः। साऽत्यन्तहिमोत्किरानिलाः सहस्यरात्रीरुदवासपरा एव निनाय। एवमादिभिर्व्रतैः स्वमङ्गं ग्लपयन्ती कठिणतामापादितैस्तैरङ्गैस्तपस्विनां तपोऽपि दूरमधश्चकार। तदा भूतभावनश्चन्द्रमौलिरात्मानं दर्शयति। तथा च यस्याः स्वस्मिन्दृढां भक्तिं विज्ञाय वदति च। 'अद्य प्रभृत्यवनताङ्गि तवास्मि दासः क्रीतस्तपोभिरि'ति। यदीदृग्विधं प्रेम, पतिश्चैतादृशो भवेत् तदेव कामपुरुषार्थश्चरितार्थो भवतीति कवेराशयः सुस्पष्टो विभाव्यते।

धर्मः कथमुपार्जनीय इत्यत्र प्रतीकत्वेन राजा दिलीपो वर्णितः। अर्थकृते रघुर्निदर्शितः। कामपुरुषार्थस्तु तत्र तत्रानुस्यूत एव दृश्यते सर्वत्र। धर्मेऽर्थे कामे मोक्षे च भगवान्रामचन्द्रः ख्यातपूर्व एव प्रमाणीकृतः। सर्वे एव रघुवंश्या अन्ते योगेनैव तनुत्यजः। अतः सर्वे एव ते मोक्षाधिकारिण आसन्। अत्रेदं ज्ञेयम्। कालिदासप्रतिपादितः कामः केवलं शृङ्गारादिरससमुद्भूतो मनसिजवियक एव न, किन्तु व्यापकरूपेणेच्छामात्राजन्योऽखिलस्तुत्यविषयोद्भावक एव ग्राह्यः। सेयमिच्छोभयप्रकारिका प्रतिपादितात्रोपलभ्यते। यथाऽसदिच्छा। अग्निवर्णादिषु महत्यामनर्थपरम्परायां परिणतोपवर्णिता वाढमुपदिशति रामादिवत्प्रवर्तितव्यं न रावणादिवद् इति। एवमेषु ग्रन्थेषु प्रतिपादिता वर्णिताश्च नायकाः केचिद् धर्मकामाः, केचिदर्थकामाः केचिदुभयकामाः केचित्क्रमकामाः अपरे मोक्षकामाश्च सन्ति। अर्थकामेष्वपि बह्वो विधाः सन्ति। तत्र केऽपि यशःकामा, अपरे दानकामाः अन्ये प्रजाकामाः। एवं तेन यत्प्रतिज्ञातं नाट्यं भिन्नरुचेर्जनस्य बहुधैकं समाराधनमिति तदक्षरशोऽवितथीकृतम्। इत्थमस्मिञ्जगति यत्किञ्चिदपि स्पृहणीयतरमस्ति तत्सर्वं कविनाऽनेन तत्रतत्र निपुणमुप-

निबद्धं दृश्यते, यस्य पठनेन दर्शनेन च पाठकाः सहजां तन्मयतामवाप्य ब्रह्मास्वादसहोदररूपानन्दभावत्त्वमवाप्नुवन्ति अनेकशास्त्रवैशारद्यं च मनोविनोदपूर्वकम् इति शम् ।

---

# रघुवंशकाव्यस्य सङ्क्षेपसमालोचना

श्रीवेङ्कटरमणार्याः निवृत्तमैसूरुदेशीयसंस्कृतशालोपद्रष्टारः बेंगळूरु

प्रथमं तावल्लोके, किं मधुरमित्यवधारयन्तु प्राज्ञाः । इदन्तु सर्वानुभववेद्यम् "दधि मधुरं, मधु मधुरं, द्राक्षा मधुरा, सुधापि मधुरैव । मधुरादप्यतिमधुरं, मधुरानाथस्य नाम यत्किञ्चित्" ॥ मधुरानाथस्य नाम मधुरादप्यति मधुरमिति कथमनुभववेद्यं चेत्, श्रावणप्रत्यक्षमुखेनैव तद्व्यक्तं भवति । तत्कथमित्युक्ते, मथुरानाथ एवाऽयोध्यानाथ इति भावयित्वा, महर्षिर्वाल्मीकिः "रामरामेति मधुरं मधुराक्षरं," चुकूजेति स्मर्यते खलु । किं तावतेत्याक्षेपे, तत्कृतश्रीरामायणकथामनुसन्धाय महाकविः कालिदासः रघुवंशाख्यमहाकाव्यं रचितवान् खलु, तदपि मधुरादप्यतिमधुरमेवेति प्रकरणसंगतिः । स कविः, श्रीरामस्य, तत्पूर्वजानां, तदपरजानां च राज्ञां, चरितमुपवर्णयितुं यदा प्रारेभे, तदा तन्मुखाद्दिव्यवाणी मधुरमधुरा सती, प्रवहति स्मेति प्रत्ययप्रकाशनमेव । अस्यां समालोचनायां ग्रन्थकर्तुर्मुख्योद्देश इति भावयन्तु भावज्ञाः ।

इदानीं, "उपमा कालिदासदासस्ये" त्यभिजनोक्तिमादृत्य, रघुवंश बहुत्र, प्रदर्शितामुपमाशोभां, उपमागर्भितदृष्टान्तशोभां च किंचिद्विशदीकरोमि । यथा, रघुवंशे प्रथमसर्गे प्रथमश्लोके "वागर्थाविव संपृक्तौ, पार्वतीपरमेश्वरौ वन्दे" इत्युक्त्या, एकोप्यात्मा जगत्सृष्ट्यर्थं, "द्विधा कृत्वात्मनो देहं, अर्धेन पुरुषोऽभवत् । अर्धेन नारी तस्यासी" दिति मनुस्मृतिवचनं प्रमाणीकृत्योदितमिति गम्यते । "जगतः पितरावित्यनेन, प्रकृतिपुरुषयोस्समावेश-

नेनैव जगदुत्पत्तिरिति साख्यतत्वमुपादिश्यते । किंच प्राणिप्रसूतेः स्त्री-पुरुषसमागमस्यावश्यकता सूचितेति ध्वन्यते ।

द्वितीयश्लोके, "तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्," इत्यनेन, सूर्यवंशस्य महत्वमालोच्य, तद्वर्णनमात्मनो न साध्यमिति तदुद्यमे प्रवृत्तिरवधीरणाक्षमेति च कविना भावितम् । अनेन धीरभावस्य प्रत्यर्थिभूतो दीनभावः प्रदर्शितः ।

तृतीये, "प्रांशुलभ्ये फले लोभादुद्बाहुर्वामन इवापहास्यतां गमिष्यामि" इति कथयता स्वाहंकारखंडनं कृतम् । अपिच, स्वात्मन्यप्रत्ययं च दर्शितम् । चतुर्थे पुनः, अथवा वज्रसमुत्कीर्णे मणौ सूत्रस्य यथा गतिरस्ति, तथा ममापि पूर्वसूरिभिः कृतवाग्द्वारे, रघुवंशवर्णने गतिरस्तीति, दीनभावमुत्सृज्य धैर्यमवष्टभ्य, स्वात्मनि सात्विकभावोदयकाले, वाल्मीकिमहर्षिकृतरामायणमनुचिन्त्य स्वोद्दिष्टकार्यसाधनं कर्तुं निश्चितवानयं कविरित्यवगम्यते । पञ्चमषष्ठसप्तमश्लोकेषु, मनुवंशजानां नृपतीनां सुगुणपरंपरां वर्णयित्वा, नवमे, "रघूणामन्वयं वक्ष्ये" इति प्रतिज्ञाय, दशमे, "हेम्नः विशुद्धिः, श्यामिकापिवा अग्नौ संलक्ष्यते ही" ति, दृष्टान्तमुखेन, सदसद्व्यक्तिहेतवस्सन्तः स्वग्रन्थं श्रोतुमर्हन्तीत्युक्त्या, प्राज्ञसज्जनानामवधानमपेक्ष्य मनुवंशजानां राज्ञां चरितं क्रमेण कथयितुं कविरुपक्रमते ॥

अस्य महाकवेः स्वकृतिमुद्दिश्य प्रकाशितेऽस्मिन्नुपोद्घाते तावदेतावन्वाङ्माधुर्यं निर्गलितं चेद्, एकोनविंशातिसर्गात्मके रघुवंशाख्यपूर्णग्रन्थे क्रियन्माधुर्यं व्यक्तं भवतीत्यभिज्ञैरेवाभ्यूहनीयम् । एवमेव बह्व्यः काव्यसंपदः तत्कविकृतिषु जाग्रत्येव । तासां सर्वासां परिशीलनमावश्यकमपि, बुद्धिसाध्यमपि, नायमवसरः, नापि समर्थोऽयं जन इति कृत्वा; स्थालीपुलाकन्यायेन, तदीयरघुवंशे एकैकसर्गस्थमेकैकश्लोकमेवावलंब्य, तदीयवाङ्माधुर्यप्रदर्शनाय श्रोतृपठितृजनानामवगाहनाय चात्रेदानीं यथामति समालोचनाधिक्रियते ।

दिलीपस्य राज्यभारवर्णनावसरे, प्रजाभ्यः- करग्रहणस्योद्देशः एवं दर्शितः —

" प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत् ।

सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः ":॥ (रघु, स, श्लो. १७) सूर्यः, भूमिस्थसमुद्रादिभ्यः, आदानकाले (उत्तरायणे) स्वकरैर्जलमाकृष्य, तत्सहस्रगुणं विसर्गकाले (दक्षिणायने) वृष्टिरूपेण जलं विसृजतीति दृष्टान्तेन, न केवलं काव्यशोभा, अपितु राजधर्मः, वृष्टितत्वं, प्रजाभ्युदयः, इत्यादिकं च व्यंग्यमर्यादया प्रपञ्चितम् ।

वसिष्ठमहर्षेः, नन्दिनीनामकधेनुः अरण्ये सिंहेन यदा गृहिता, तदा तत्सेवार्थं तद्रक्षणार्थं च तदनुगामिनो दिलीपस्य वचनमिदम् —,

" क्षतात्किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः । राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा " ॥ (रघु, स २ श्लो, ५३) ।

इत्युत्क्या, आपत्काले, प्रजारक्षणं प्राणिदया इत्यादिगुणपरंपरैव राजधर्मस्य लक्षणमित्यनुसंधानं प्रकाशितम् । रघुवंशप्रदीपा राजान आत्मत्यागेनापि साधून् रक्षन्ति स्मेति ध्वनिरप्यभिव्यज्यते ।

राजा दिलीपः युवराजेन रघुणा सह राज्यं कृतवानिति कथनसंदर्भे,—

" विभावसुस्सारथिनेव वायुना घनव्यपायेन गभस्तिमानिव । बभूव तेनातितरां सुदुस्सहः कटप्रभेदेन करीव पार्थिवः " ॥ (रघु. स. ३. श्लो. ३७) इत्युक्तम्, ।

अत्र त्रीण्युदाहरणानि दत्तानि । तैः वायुसहायेनैव अग्निर्ज्वलति । शरदि मेघानां व्यपोहे सति सूर्यः सुष्टु प्रकाशते । गजः मदोदके निस्सृते सुखी भवति, इति भूतानां सहायसंपत्तिं प्रयोजनं सम्यक्प्रदर्शितम् । तेषां स्वाभाविकप्रवृत्तिश्च सूचिता ।

रघोर्जैत्रयात्रायामनेके राजानः शरणागता बभूवुरित्यत्र,

अपनीतशिरस्त्राणाः शेषास्तं शरणं ययुः ।
प्रणिपातप्रतीकारसंरंभो हि महात्मनाम् " इत्युक्तम्, (रघु. स. ४ श्लो. ६४) ।

अत्र महतां, कोपाविर्भावे सति, कोपपात्रेभ्यः प्रणिपात एव तान् शान्तान् करोतीति, तदा ते शरणागतानामपराधान् क्षमन्ते इति प्रतीतार्थः स्फुरति । व्यंग्यार्थस्तु, महात्मानः युद्धे प्रसक्ते, स्वशत्रूणां प्राबल्यमौद्धत्यं च नाशयितुं प्रवर्तते, न तु तेषां जीवितमपहर्तुमिति । अनेन आर्याणां समरधर्मः सम्यग्बोधितो भवति ।

गुरुदक्षिणार्थिनः कौत्सस्य, धनसाहाय्यार्थं रघुः कुबेरनिकटमयादिति वर्णनावसरे,

" वसिष्ठमन्त्रोक्षणजात्प्रभावादुदन्वदाकाशमहीधरेषु । मरुत्सखस्येव, बलाहकस्य गतिर्विजघ्ने नहि तद्रथस्य " ॥ इत्युक्त ( रघु. स. ५ श्लो. २७ ) ।

वायुसहायेन मेघाश्चलन्तीत्युक्ते, वायुरेव मेघान् स्थलात् स्थलांतरं नयतीति वायोः स्वाभाविकचेष्टा प्रदर्शिता । सा स्थलजलगगनेषु स्वभावतो व्याप्ता, वायुगतेः कुत्रापि निरोधो यथा नास्ति, तथा रघोः रथस्य अद्रिषु, वारिषु, नभसि च गतिविच्छेदो नास्तीति वर्णितं भवति । अनेन पूर्वकाले राजानः षड्विधबलेन भूम्यां, नौकाबलेन समुद्रे, विमानबलेन आकाशे संचारशीला अभवन्निति, एतत्सर्वं मन्त्रबलेन साधितुं शक्यमिति उदाहरणार्थं वसिष्ठमन्त्रोक्षणप्रभावात् तथा साधितमिति च दर्शितम् ।

इन्दुमतीस्वयंवरार्थं मिलितानां रत्नसिंहासनस्थानां नवरत्नखचितभूषणभूषितानां राज्ञां संबन्धी, पुञ्जीभूतकान्तिविशेषः महानद्भुत आसीदिति वर्णनावसरे,

तासु श्रिया राजपरंपरासु प्रभाविशेषोदयदुर्निरीक्ष्यः । सहस्रधात्मा व्यरुचद्विभक्तः पयोमुचां पङ्क्तिषु विद्युतेव ॥ इत्यभिहितम् ( रघु. स. ६ श्लो. ५ ) ।

अत्र पयोमुचां पङ्क्तिषु, विद्युता सहस्रधा विभक्तः आत्मा ( विद्युत्प्रभाविशेषः ), यथा दुर्निरीक्ष्यो रोचते, तथा तासु राजपरंपरासु, श्रिया सहस्रधा

विभक्तः आत्मा, (श्रितः आत्मा—कान्तिविशेषः) प्रभाविशेषोदयद्दुर्निरीक्ष्यः व्यरुचत् । इत्यन्वयेनैव श्लोकार्थस्सुगमो भवति । तथापि यथा सूर्यः एकोपि, तरंगेषु प्रत्येकं तरंगितः सहस्रधा भाति, तथा सूर्यप्रभाविशेषरूपा विद्युत्, मेघमंडलमनेकधा विभज्य, विभक्तेषु स्वयं संक्रान्ता, मेघस्य आधारभूता वर्तत इति । अत एव भूम्यां कर्षणशक्त्या मेघो न पततीति भौतिकतत्वम्, अतः मेघस्य "तडित्वानि" ति व्यपदेश इति शब्दव्युत्पत्तितत्वम्, यदा विद्युत् मेघान्निर्गच्छति तदा वर्षतीति वृष्टितत्वम्, पूर्णस्य वस्तुनः भागेभ्योप्यधिकं बलं, प्रकाशश्च भवतीति प्रकृतिनियमं तत्वं चात्राभ्यूहनीयं भवतीति स्वारस्यमाविष्कृतम् ।

इन्दुमतीस्वयंवरानन्तरं, अजो रघुजो राजा, प्रत्यर्थिभूपैस्सह समरकर्मणि प्रसक्ते, गान्धर्वास्त्रप्रयोगेण तान् निद्रावशान् कृत्वा विजयी बभूवेत्यर्थः, "प्रियंवदाप्राप्तमसौ कुमारः प्रायुङ्क्त राजस्वधिराजसूनुः । गान्धर्वमस्त्रं कुसुमास्त्रकान्तः प्रस्वापनं स्वप्ननिवृत्तलौल्यः" ॥ इति श्लोकेन संकथितः (रघु. स. ७ श्लो. ६१) ।

अधिराजसूनुः (महाराजपुत्रः) कुसुमास्त्रकान्तः (मदनसुन्दरः) स्वप्ननिवृत्तलौल्यः (जागरूकः), इति, कुमारपदस्य विशेषणानि व्याख्यातानि । एतादृशकुमारः अजः प्रस्वापनं—(निद्राजनकं) गान्धर्वमस्त्रं प्रायुङ्क्त, इत्यन्वयमुखेन संग्रहेण प्रकरणार्थः कथितः । गान्धर्वास्त्रं निद्राजनकव्यापारवदित्यर्थेन आधुनिकसमरोद्यमेषु प्रयुज्यमानविषधूमास्त्रतत्वमप्यार्यैरवगतपूर्वमेवेति ध्वनिरभिव्यज्यते । कथमिति चेद्, वेदेषु गन्धर्वशब्दः सूर्ये, सूर्यरश्मिषु च प्रसिद्धः । सूर्यस्यातितापेन निद्राप्राप्तिरनुभववेद्या । तादृशतापशक्तिः विषधूमे वर्तत एव । अथवा सूर्यापरनामकगन्धर्वदेवताकमन्त्रप्रोक्षणबलाद् गन्धर्वास्त्रस्य तथा निद्राजनकशक्तिर्भवतीति मन्त्रशास्त्रतत्वमुपदिष्टमत्रेति भाव्यम् । अयमेव विशेषोऽस्मिन् श्लोके ।

उपवने विहारपरयोरिन्दुमतीतत्प्रिययोर्मध्ये, इन्दुमतीवक्षसि गगने चरतो नारदस्य वीणाया अग्रस्थिता दिव्यकुसुमस्रग् यदाऽपतत्, तत्संबंधेन सा यदा ममार, तदा तद्वियोगजनितशोकाभितप्तस्य अजमहाराजस्य विलापोक्तिर्यथा,

"स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति माम् ।
विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया ॥ (रघु. स. ८ श्लो. ४६) ।

यत्स्रक्सम्बन्धेन स्वप्रिया ममार, सा "जीवितापहा" इति मत्वा, तामेव राजा स्वहृदये निहितवान् । तथापि, स न ममार । तदा तेन, दैवेच्छया विषमप्यमृतं क्वचित्, तथा अमृतमपि क्वचिद्विषं भवती" ति अर्थांतरन्यासेनोक्तम् । यद्यपि इयमुक्तिः राज्ञा विषादपरीतेन, अत एव भ्रान्तेन गदिता । तथापि, एतादृशसूक्तिषु सामान्यतोऽज्ञानामन्धश्रद्धा सुप्रसिद्धा । वस्तुतस्तु, अमृतं न कदापि विषं भवति, विषं वाऽमृतम् । अन्यथा यद्येवं, तर्हि उपाधिमन्तरा अग्निश्शीतो भूयात् । जलमुष्णं भूयात् । न क्वचित्कदाचित्तथा भवति । वस्तुस्वभावो नातिरिच्यते । अत एवेयं भ्रमोक्तिरेव । अत्र, "जीवितापहा" इतिपदस्य जीविनां यः तापः तं अपहरतीति नैजोऽर्थः, कुसमस्रग्विषये यदांगीक्रियते, तदेयमुक्तिः स्वभावोक्तिः । अन्यथा भ्रान्तिमदुक्तिरिति भाव्यम् ।

वैश्येन शूद्रायां जातः कश्चिन्मुनिः मृगयाविहारपरेण, दशरथेन जलपूरणकुम्भध्वनौ गजबृंहणभ्रान्त्या प्रमादाद्यदा हतः, तदा तत्पित्रा कृतश्शापोऽप्यनुग्राहक इति भावयता दशरथेनैवमुक्तम्—

"शापोऽप्यदृष्टतनयाननपद्मशोभे सानुग्रहो भगवता मयि पातितोऽयम् ।
कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो बीजप्ररोहजननीं ज्वलन करोति ॥ (रघु. स. ९ श्लो. ८०) ।

अत्र अर्थांतररूपदृष्टान्ते स्वारस्यमस्ति । यतः प्रज्वालितः काष्ठाग्निः कृषियोग्यां भूमिं दहन्नपि तां बीजाङ्कुरोद्भवद्वारा पुष्पफलसमृद्धां करोतीति उक्त्या, किञ्चित्कापितत्वमुपदिष्टं भवति । यथा कृषियोग्या भूः, यदा अग्निना काष्ठादिभिः दग्धा भवति, तदा सा विशीर्णचूर्णा सती, दोहदरूप-

दग्धकाष्ठभस्मादिभिः कृषिसाधनसमर्था भवति । बीजावापे, शाखाङ्कुरसंरोपणे वा वृष्टिकृतसाहाय्यकारणेनापादिता किसलयोत्पत्तिः सहजैव । कृषितत्वविदां विचारसहोयं विषयः ।

पुत्रकामेष्टितत्परे दशरथे लंकाधिपेन ब्रह्मदत्तवरेण दशकंठेन बाधिताः काश्चिद्देवताः श्रीरामावतारात्प्राक् समुद्रशायिनं विष्णुमेवं स्तुतवन्तः ।

" रसांतराण्येकरसं यथा दिव्यं पयोऽश्नुते । देशे देशे गुणेष्वेवमवस्थास्त्वमविक्रियः ॥ (रघु. स. १० श्लो. १७) ।

अत्र व्यावहारिकाणां, वैज्ञानिकानां, ज्ञानिनां च सर्वसम्मतानि तत्वान्युपदिष्टानि भवन्ति । यथा वृष्ट्यापादितं समुद्रजलं लवणप्रधानम् । गंगादिनदीजलं मधुरम् । क्वचित्कश्मलोपेतं पल्वलादिजलम् । कटु वा, तिक्तं वा, अमलं वा भवतीति लोकानुभवः । मेघाद्विसृष्टं जलमेकमपि, तत्रतत्र भूगुणमपेक्ष्य भिन्नगुणं भवतीति भौतिकविज्ञानिनामभिप्रायः ।

मारीचवधसमये रामेण प्रयुक्तवायव्यास्त्रमहिमा एवं वर्णितः,

" सोऽस्त्रमुग्रजवमस्त्रकोविदस्संदधे धनुषि वायुदैवतम् । तेन शैलगुरुमप्यपातयत्पाण्डुपत्रमिव ताडकासुतम् ॥ (रघु. स. ११ श्लो. २८) ।

अत्र मारीचस्य गुरुशैलसाम्यं कृतम् । तादृशगुरुरपि सः, अम्बरे संचरितवानित्यनेन भूम्याकर्षणशक्तिमपि विलंघ्य गगने सुखेन संचरितुमपि समर्था बभूबुः पूर्वजा इति आधुनिकसमरोद्योगिनां सुबोधो भवेत् । किञ्च, तथा गुरुभूतं मारीचं श्रीरामः वायव्यास्त्रेण जीर्णं पलाशमिव पातितवानित्यनेन, धूमवायुतत्वप्रभावं च भारतीयास्सम्यग्विदितवन्त इति, आधुनिकानां वायुतत्वकोविदानामवगतिर्भवेदेवेति संभाव्यते ।

आसन्ननिर्वाणस्य दशरथस्य स्थितिरेवं वर्णिता —

"निर्विष्टविषयस्नेहस्स दशान्तमुपेयिवान् । आसीदासन्ननिर्वाणः प्रदीपार्चिरिवोषसि ॥ ( रघु. स. १२ श्लो. १ ) ।

अत्र श्लेषभंग्या रूपकस्वभावोक्त्यनुप्राणितोपमा कविताकौशल्यं सम्यक् प्रकाशयति । मोक्षार्थिना दशरथेन ऐहिकविषयेषु अभिमानः भुक्तभोग्यत्वात्परित्यक्तः । स दशान्तं,–आयुषः परिमितिं, उपेयिवान्—गतवान् , अत एव-आसन्नः–प्राप्तः, निर्वाणः–प्राणपरित्यागः, मोक्षो वा यस्येत्युपमेयार्थः । उपमानार्थविषये, दीपाश्रयभाजने, स्नेहः–तैलादिः, निर्विष्टः—समाप्तः, शोषित इति यावत् । अत्र दशायाः–दीपवर्तिकायाः अन्तं–यावदन्त्यभागं, अर्चीरूपा-दीपज्वाला, उपेयुषी–गतवती व्याप्तेति यावत्, अतएव प्रदीपदशामापन्ना— तैलशोषणे वर्तिकांतदीपः, पूर्णवर्तिकामाक्रम्य, स्वनिर्वाणसमये प्रज्वलतीति स्वभावोक्तिः । अतः तादृशार्चिः आसन्ननिर्वाणं–समीपस्थविनाशमभूदित्युक्तम् । अत्र, " उषसि " इति पदं व्यर्थमित्यापाततः प्रतिभाति । सूक्ष्मदृष्ट्या विचारे कृते, पदप्रयोजनं महदस्ति । यथा–उषस्यनंतरं सूर्योदयो भवत्येव । तदा दीपस्य प्रकाशः म्लानो भवति । महाप्रकाशे अल्पः प्रकाशः न राजते हि । एवंच सूर्यप्रकाशेऽन्तर्हितो भवति दीपप्रकाशः, इत्यनेन उषस्यनंतरं सूर्योदयात्परं दशरथः प्राणानत्यजदिति, तज्जीवात्मा तेजोमयो भूत्वा, रश्मिद्वारा सूर्यमंडलं प्राप्य, तद्द्वारा मोक्षं गतवानिति ध्वन्यते । एतादृशकवितारीतिरनन्यसाध्येति भाव्यते ।

रावणवधानन्तरं, अयोध्यां प्रस्थितेन रामेण सीतां प्रति पूर्ववृत्तकथनावसरे सीतालक्ष्मणसुग्रीवविभीषणतदनुगैस्सहितस्य, पुष्पकविमानस्य अतितूर्णगतिरेवं वर्णिता—

" क्वचित्पथा संचरते सुराणां क्वचिद्घनानां पततां क्वचिच्च । यथाविधो मे मनसोऽभिलाषः प्रवर्तते पश्य तथा विमानम् ॥ ( रघु. स. १३ श्लो. १९ ) ।

अत्र विमानरचनाकौशल्यं तस्मिन्ननेकजननिवेशार्हस्थानकल्पनं, दिवि सर्वत्र यंत्रधरेच्छया उत्प्लवनप्रवृत्तिशक्तिनिर्माणमित्यादिकं बहुकालादारभ्य विज्ञातपूर्वमिति स्पष्टं भवति। तादृशविमानं रामस्याभिप्रायमनुसृत्य कदाचित् भूम्या उपरि, पक्षिणां मार्गे आकाशे, कदाचित् तदुपरि मेघसंचारमार्गे अंतरिक्षे, कदाचिन्मेघमण्डलस्योपरि अमराणां मार्गे दिवि च, संचरतिस्मेति विमानस्य संचारवेगविशेषान् जानताम्, आकाशे बहून्नतप्रदेशे वा आधुनिकविमानवेगातिशये वा किमप्याश्चर्यं जायते इत्यभिमतम्।

लोकापवादभयाद्रामेण परित्यक्तां सीतां वने वाल्मीकिः समाधाय, तां तापसीनामायत्तामकरोदिति कथनसंदर्भे एवमुक्तम्।

"तामर्पयामास च शोकदीनां तदागमप्रीतिषु तापसीषु। निर्विष्टसारां पितृभिर्हिमांशोरन्त्यां कलां दर्श इवौषधीषु ॥ (रघु. स. १४ श्लो. ६०)।

अत्र उपमेयोपमानयोः संबंधः यथा—तापसीजना एव--ओषधयः, सीता -- चन्द्रस्य षोडशी कला, सा रामेण त्यक्तत्वात् शोकेन दीना। चन्द्रस्य अंत्यकलापि, पितृभिर्भुक्तत्वात् निर्विष्टसारा। तापस्यः सीतारामप्रीतियुक्ताः—ओषध्योपि चन्द्रकलागमप्रीतियुक्ताः। वाल्मीकिः--दर्शस्थानीयः—सूर्येन्दुसमागमकालसदृशः—सूर्य इव तपसोज्वलः, इन्दुरिव शान्तिभूयिष्ठः, अत एवातिकरुणालुः इति दर्शितः। स रामः, सीतां तापसीषु, दर्शः चन्द्रस्य षोडशीकलां ओषधीष्विव, समर्पयामासेति तात्पर्यम्। विशेषार्थस्तु ओषधीलतादयः, अमावास्यायां चन्द्रस्य षोडशीकलां प्राप्य यथा विशेषेण प्रीता भवंति तथा सीतां प्राप्य तापसीजनाः सुप्रीता बभूवुरिति। अत्र चन्द्रकलाः पितृभुक्ता भवंतीत्युक्तौ तत्वविज्ञानदृष्ट्या विचारितव्यम। यमः पितृपातीरिति गद्यते हि। सूर्य एव यम इति ज्ञाते, पितृशब्दः सूर्यकरे अन्वेतुं शक्यते। सूर्यकरा एव अम्मये चन्द्रे प्रतिबिंबिताः चन्द्रकला भवन्ति। ताः सूर्याचन्द्रमसोः परस्सन्नि-

कर्षभूतायाममावास्यायां सूर्यकैराच्छादिता भवन्ति । अत एव न प्रकाशन्ते । तासामम्मयत्वात्, तत्संपर्केण ओषधीनां मोदः ( वृद्धिः ) स्वाभाविकः, एतत्तत्त्वम् अनेन ग्रन्थकर्त्रा विरचिते सनातनभौतिकविज्ञानाख्यग्रन्थे ६६-५६ संख्याकेषु पत्रपुटेषु, विस्तरेण प्रतिपादितं वर्तते । तद्वीक्षणेन कुतूहलिनां संशया निवर्तिता भवन्ति ।

सीता शुद्धेति जनानां प्रतिपत्तिं विधातुं वाल्मीकिः कुशलवाभ्यां सीतया च सह रामं प्रतिगतवानिति कथाप्रसंगे, इयमुक्तिः कविना ग्रथिता—

" स्वरसंस्कारवत्यासौ पुत्राभ्यामथ सीतया । ऋचेवोदर्चिषं सूर्यं रामं मुनिरुपस्थितः ॥ ( रघु. स. १५ श्लो. ७६ ) ।

स्वरसंस्कारवती, ऋक् ( मन्त्रः )—सीता च, । कथम् ? स्वरः—मन्त्रोच्चारणयोग्यो ध्वनिविशेषः—उदात्तादिः, संस्कारः शब्दनिष्ठसाधुत्वादिशक्तिमद्धर्मः । सीतापक्षे स्वरस्थानीयः कुशः, संस्कारस्थानीयः लवः, तद्वत्यर्थः । अथवा सीता शुद्धेति मुनिभिस्सुस्वरेण—घण्टाघोषेण कथितम् अतः स्वरेण शुद्धा । अग्निप्रवेशरूपात्संकारादपि शुद्धा-अतः संस्कारशुद्धेति तात्पर्यम् । ऋचा इत्येकवचनप्रयोगेण सावित्री ऋक्, ( सवितृदेवताकाऋक् ) ग्राह्या—गायत्रीमन्त्र इत्यर्थः । स मन्त्रः, सर्वैर्द्विजैः प्रत्यहमुच्चार्यत एव, किंतु स्वरसंकारसहितः उच्चार्यते वेति संशयः । उदात्तादिस्वरविशेषैश्शब्दशक्तिमुद्घाट्य, मंत्रस्य पदनिष्ठां, वाक्यनिष्ठां च अर्थशक्तिं सम्यग् ज्ञात्वा, स जपादा उपयुक्तश्चेत्, तदैव मंत्रः सफलो भवति, नान्यथेति मन्त्रतत्वमत्र सम्यगुपदिष्टं भवति ।

अयोध्याधिदेवतया प्रार्थितः राजा कुशः कुशावतीं त्यक्त्वा पुनरयोध्यां यदाध्युषितवान्, तदा ग्रीष्मवर्णनावसरे,

यन्त्रप्रवाहैश्शिशिरैः परीतान् रसेन धौतान्मलयोद्भवस्य । शिलाविशेषानधिशय्य निन्युर्धारागृहेष्वातपमृद्धिमंतः ॥ इत्युक्तम् । ( रघु. स. १६ श्लो. ४९ ) ।

अत्र ऋद्धिमन्तः धारागृहेषु शिशिरैः यन्त्रप्रवाहैः परीतान् मलयोद्भवस्य रसेन धौतान् शिलाविशेषानाधिशय्य आतपं निन्युरिति अन्वयमुखेन यद्यपि श्लोकार्थस्संगृह्यते, तथापि क्लिष्टपदानामर्थविशेषा विशदीकरणीयाः।

यथा ऋद्धिमन्तः,-धनवन्तः, धारागृहाः—जलधारायुताः गेहाः, जलयन्त्रयुक्ता इति तात्पर्यम्। अनेन स्नानपानाद्यर्थं सरयूनदीजलं, यन्त्रमुखेन प्रतिगृहं समासादितमित्यादिना तात्कालिकजनेषु विशेषेण शिल्पकौशल्यं व्यक्तं भवति। शिलाविशेषाः—मंचादिरूपेण निर्मिताः शिलाः। अत्रापि शिल्पकौशलं सूचितम्। ताः शिशिरैः यन्त्रप्रवाहैः परीताः यन्त्रविशेषैरानीतसरयूजलबिन्दूत्क्षेपणात् शीतलीकृताः, इत्यनेनापि तदानींतनजनेषु शिल्पविद्या सर्वोत्कृष्टा प्रचलितेति ध्वन्यते। अत एव, शून्यामयोध्यां कैश्चिद्दिनैः शिल्पिसंघाः—अमरावतीमिव अलकावतीमिव आपणसौधादिभिः सर्वसमृद्धां नवीनां चक्रुरिति पूर्वमेव वर्णितम्।

राज्ञि कुशे संग्रामयायिनि सति, तदाज्ञया मन्त्रिमुख्याः अतिथिनामानं तत्तनूजं सिंहासनाधिष्ठितं चक्रुः तथा, तस्य राज्यशासनप्रकाराः बहुधा प्रशंसिताः, तत्प्रकरणे खल्वेवं वर्णितम्।

"सर्पस्येव शिरोरत्नं नास्य शक्तित्रयं परः। स चकर्ष परस्मात्तदयस्कान्त इवायसम्॥ (रघु. स. १७ श्लो. ६३)।

शक्तित्रयं—प्रभुशक्तिः, मन्त्रशक्तिः, उत्साहशक्तिश्चेति तिस्रः, प्रायेण सर्वै राजभिस्समासादितव्याः। अतिथिराजस्थं तत्त्रयमाहर्तुं शेषफणास्थमाणिक्यमिव, कोपि शत्रुराजः न समर्थः। परं तु स राजा एव शत्रुराजसंपादितं तत्त्रयम् अयस्कांतोपलः आयसमिवाग्रहीत् इत्युक्ते, समरे शत्रुगता प्रभुशक्तिः नाशिता, मन्त्रशक्तिः प्रक्षोभिता, उत्साहशक्तिश्चालिताऽभूदिति तात्पर्यम्। इदमेव विजयशीलस्य राज्ञो लक्षणम्। अत्र उपमाद्वयेन केषांचित्सर्पविशेषाणां

शिरस्सु माणिक्यरूपरत्नानि भवन्तीत्यैतिह्यम्, अयस्कान्ताकर्षणशक्तितत्वं च सम्यगुपदिष्टं भवतीति ज्ञेयम्।

वंशपरंपरागतानामनेकेषां राज्ञां प्रभुत्वानन्तरं, षड्वर्षदेशीये ध्रुवसन्धिपुत्रे सुदर्शने सिंहासनमारूढे सति, शिशुमपि तं महाराजमिति सर्वे समाहूयामासुरिति कथनप्रकरणे, इत्थमुक्तम्।

"मणौ महानील इति प्रभावादल्पप्रमाणेपि यथा न मिथ्या। शब्दो महाराज इति प्रतीतस्तथैतस्मिन्युयुजेऽर्भकेपि ॥ (रघु. स. १८ श्लो. ४२)।

इन्द्रनीलमणेः महानील इति प्रसिद्धिः। कुतः ? तेजिष्ठत्वाद् इति कारणं दर्शितम्। तथैव प्रभाववानयमितिहेतोः, सुदर्शने महाराजशब्दः, सार्थक इति साधितः। प्रभावस्तु प्रभुशक्तिरेव। तद्वानयमिति तात्पर्यम्। अस्तु नाम—किन्तु, वज्रवैडूर्यादिनवरत्नेषु मध्ये, इन्द्रनीलमणावेव प्रभातिशयः कथमुपपद्यते इति विचारे तत्वमत्रैवं भवति इति समाधीयते। वज्रवैडूर्यादिषु प्रकाशातिशयो वर्तते। नतु तेजिष्ठत्वम् (दाहशक्तिरिति यावत्)। नीले तु तदतिशयेन वर्तते। अत्र सूर्यरश्मिगतसप्तवर्णेषु सप्तमे नीलवर्णरश्मावेव (Voilet ray) अधिकदाहशक्तिरिति प्राचीनैः, आधुनिकविज्ञानकुशलैरिव, निश्चितम्। अनेकरोगचिकित्सायां तादृशनीलरश्मिप्रयोगेण रोगपरिहारश्च दृष्टचर इति बुध्यते। रविकरसंतप्तकुट्टिमनीलशिलागततापः, तादृशान्यशिलातापादप्यधिक इति ग्रंथकर्तुः परीक्षानुभवश्चात्र प्रमाणपदमारोहति।

महाकविकालिदासेन वर्णितेषु रघुवंशप्रदीपेषु राजसु, अग्निवर्ण एवान्तिमः। कालाधीनं गते तस्मिन्, तस्य महिष्याः पूर्णगर्भिण्याः अंतस्थस्यैव गर्भस्य राज्याभिषेकः कृतः, राज्ञी च राज्यं दक्षतयाऽशादिति वर्णितम् तथा,

"तं भावार्थं प्रसवसमयाकांक्षिणीनां प्रजानाम् अन्तर्गूढं क्षितिरिव नभो बीजमुष्टिं दधाना ॥ मौलैस्सार्धं स्थविरसचिवैर्हैमसिंहासनस्था राज्ञी

राज्यं विधिवदसिषद्भर्तुरव्याहताज्ञा ॥ (रघु. स. १९ श्लो. ५७) ।

अस्मिन्श्लोके ज्ञेयांशाः बहवस्सन्ति । तेषु—राज्ञोऽभावे, तन्महिषीमुखेन राजशासनपद्धतिः स्मृत्याचारसम्मता । स्त्रियोपि क्वचित्कदाचिद्राज्यशासनमकुर्वन्निति बोधः । किं तत् शासनं, प्रतिनिधितयाऽधिगतमिति संशयनिवारणार्थं हेमसिंहासनस्थे '' त्युक्तम् । मन्त्रिसचिवसहायेनैव तादृशशासनं स्त्रियः साध्यमिति वदतां बोधाय विधिवत्–( यथाशास्त्रीयं ) अव्याहताज्ञा, ( अप्रतिहताज्ञा सती ) इत्युक्तम् । किमर्थं, ? प्रजानां भूतये—संपत्समृद्धये इति दर्शितम् । किंच सा महिषी, अन्तर्गूढं गर्भं दधाना सतीत्युक्तम् । अतएव प्रजाः " प्रसवसमयाकांक्षिण्यो ''ऽभूवन्निति चोक्तम् । भूमिः यथा नभस्युप्तं बीजं धत्ते तद्वदिति दृष्टांतोपि दर्शितः । बीजावापस्य नभसः प्राधान्यं कुत इत्युक्ते, बीजावापः आर्द्रादिमघान्तवृष्टिपर्यन्तं, यदा कदा वा कार्यः । अत्रतु श्लेषभंग्या नभश्शब्देन गर्भस्य रक्षणार्थं, गर्भिण्याः, गर्भस्थलावकाश इत्यर्थसंपादनमेव हेतुः । नभस्यपि ( श्रावणमासेपि ) बीजारोपः, बहुत्र क्रियत इति नभश्शब्दप्रयोगः आनुगुण्यमेव प्रकटयतीति भाव्यम् ॥

एवं सप्तत्रिंशदधिकपंचशतयुतैकसहस्रसंख्याकेषु श्लोकेषु ( १५३७ ) एकोनविंशतिसंख्याकश्लोकानां समालोचनाऽत्र यथामति निवर्तिता । अवशिष्टश्लोकानामपि समालोचना बुद्धिसाध्यापि, वयसा गलितशरीरबलस्य मन्ददृष्टेः, ( सप्तसप्ततिवर्षदेशीयस्य ) क्षुभितमनसोऽस्य जनस्याऽध्यवसायेऽद्य न निश्चितीपि, पूर्ववयस्कानां, प्रज्ञानां, कुतूहलिनामध्यवसायात्सा अतिशयमाधुर्यभूषिता भवितुमर्हतीति भाव्यते ।

अग्निवर्णात्परं तन्महिष्याः गर्भस्थितः प्राणी कदाविर्भूतः । किंनामधेयः ? किंवृत्तकः ? तदनन्तरराजानः के ? ते कान्देशानलंचक्रुरित्यादिकमपि राजचरितदृष्ट्या, विविधग्रन्थपरिशीलनेन वा, शिलालिपिपरिशोधनेन वा अन्यैर्यैः कैरुपायैर्वा, निर्धारितव्यमेवेति संसूच्य, प्रज्ञाचोदनाधिदेवतां मनसि ध्यात्वा, प्रस्तुतविषयः परिसमाप्यते ॥

---

# उपमा कालिदासस्य

लेखकः—गुंडेराव हरकारे वाचस्पतिः शिरोमणिः विद्याभूषणम् ।
डि. जज सं—गद्वाल.

उपमालंकारविषये कालिदास एव सर्वानतिशेते । अत्रोपमापदं न केवलमुपमालंकारपरम् । अपितु रूपकादीनामपि ग्राहकम् । अथवा वामनरुद्रटादीनां मतमाश्रित्योपमामूलकानां प्रायशः सर्वेषामप्यलंकाराणां संग्राहकम् ।

अपि च "उपमा कालिदासस्य" इत्यनेन कालिदासस्योपमायाः किंचिद् वैशिष्टयं प्रतीयते । यद्यपि ऋग्वेदे उषःप्रभृतीनां वर्णनावसरे रामायणे सुंदरकांडादिषु चंद्रादिवर्णनप्रस्तावे च तत्रतत्र, अतीव रम्या निसर्गमनोहराः औचित्यावहाः वर्णनीयवस्तुयाथार्थ्यद्योतिन्य उपमाः समुल्लसन्ति । तथापि कालिदासविरचिताः उपमा अतीव हृद्या इति सूक्ष्मदृशां पर्यालोचनया स्पष्टमेव प्रतीयते । कालिदासपूर्वकालीना उपमा दीर्घदीर्घतरा अपि गूढाः अहृद्याः साधारणधर्मवत्योऽपि एकदेशिसाधर्म्यद्योतिन्यः एव दृश्यंते । अपिंच कालिदासादनंतरं भवभूतिबाणमाघश्रीहर्षादिभिः महाकविभिः अतीव हृद्या सहृदयहृदयाल्हादायिन्यः उपमा विरचिताः । तथाऽपि तासु न तथा रामणीयकं यथा कालिदासीयासु । यदि कालिदासेन उपमायाः इयत्ता सर्वांगपूर्णतां नीता इत्युच्येत, तर्हि अनंतरकालीनमहाकविभिरुपनिबद्धयोपमया हृद्यतरयाऽधिकमनोहारिण्या च भाव्यम् । उत्तरोत्तरमभिवृद्धेः सौक्ष्म्यातिशयस्यावश्यंभावनियमात् । परंतु परमार्थतो विचार्यमाणे तथा न प्रतीयते । कालिदासस्योपमाया एव सर्वमहत्वं दृष्टम् । तत् किंनिबंधनमिति विचारयामः ।

अलंकारा हि वाच्यसर्वस्वसाराः । बाह्यालंकारसाम्यात् अङ्गिनश्चारुत्वहेतव इति उपमादीनामलंकारव्यपदेशः । अत एवालंकाराणां प्रधानवाक्यार्थोपस्कारकतयैव विनियोगः । तथाऽपि यदा स्ववैचित्र्यमात्रविश्रांताः वाच्यार्थोपस्कारका वा प्रयुज्यंते तदा ते चारुतातिशयं तथा न पुष्णंति यथा

व्यंग्योपस्कारकाः । अत एव ते समीक्ष्य विनिवेशिताः रसभावाद्यभिव्यक्तिहेतवः संपद्यन्ते । शोभां चालौकिकीमादधति । अत एव—

चलापांगां दृष्टिं स्पृशसि बहुशो वेपथुमतीम्
रहस्याख्यायीव स्वनसि मृदु कर्णांतिकचरः ।
करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरम्
वयं तत्त्वान्वेषाद् मधुकर ! हतास्त्वं खलु कृती ॥ (शाकुंतले)

इत्यत्र भ्रमरस्वभाववर्णनोपष्टंभकानामुपमागर्भाणां सामासोक्तिव्यतिरेकाद्यलंकाराणां प्रकृतविप्रलंभशृंगारांगत्वेनैव चारुतातिशयः । एवमचेतनवस्तुविषयकेऽपि वाक्यार्थे यत्र चेतनवस्तुवृत्तांतयोजना अस्ति तत्रापि चित्तवृत्तिविशेषाणां सम्यगुद्बोधात् भवत्येवालंकाराणामलौकिकशोभाहेतुत्वम् । यथा—

तन्वी मेघजलार्द्रपल्लवतया धौताधरेवाश्रुभिः
शून्येवाभरणैः स्वकालविरहाद् विश्रांतपुष्पोद्गमा ।
चिंतामौनमिवाश्रितां मधुकृतां शब्दैर्विना लक्ष्यते
चंडी मामवधूय पादपतितं ज्ञातानुतापेव सा ॥ विक्रमोर्वशीये

यथा वा —

तरंगभ्रूभंगा क्षुभितविहगश्रेणिरशना
विकर्षंती फेनं वसनमिव संरंभशिथिलम् ।
यथाविद्धं याति स्खलितमभिसंधाय बहुशो
नदीरूपेणेयं ध्रुवमसहना सा परिणता ॥ विक्रमोर्वशीये

किंच—

श्यामास्वंगं चकितहरिणीप्रेक्षणे दृष्टिपातम्
गंडच्छायां शशिनि शिखिनां बर्हभारेषु केशान् ।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्
हंतैकस्थं क्वचिदपि न ते भीरु सादृश्यमस्ति ॥ मेघ०

इत्यत्र तु श्यामादावंगादितादात्म्याहार्यसंभावनारूपोत्प्रेक्षा यथोपक्रांता तथा निर्वाहिताऽपि विप्रलंभश्रृंगाराभिव्यक्तिहेतुर्जाता । ईदृशी चमत्कृतिः केवलं रसपरिपोषायैवालंकाराणां सन्निवेशनं च कालिदासकाव्यादन्यत्र प्रायशो न दृश्यते ॥

बाणादयस्तूपमाया निसर्गरम्यतायाः स्थले बह्वायाससाध्यां प्रायशो नीरसां कृत्रिमां शब्दचमत्कृतिमेव विशेषेणो नियुंजते । "वृद्धेव जातरूपक्षये" त्यादि, उज्जयिनीवर्णनावसरे नगर्यां वृद्धायां च साधर्म्यं श्लेषमूलकशब्दात्मकमेव जातरूपक्षयत्वरूपम् । उज्जयिनीपक्षे जातरूप ( सुवर्णमय ) क्षय ( गृह ) वत्वं, वृद्धापक्षे जातो रूपस्य शरीरसौष्टवस्य क्षयः नाशः यस्याः इति । तथैवान्येनाप्युक्तम्—" भारतं नाकमंडल " मिति । अत्र सुपर्वालंकृतत्वं साधारणो धर्म अध्याहार्यः । भारतपक्षे सु-पर्वभिः शोभनग्रंथप्रकरणैरलंकृतत्वमिति । स्वर्गपक्षे "सुपर्वाणः सुमनसः" इति देवैरलंकृतत्वमिति । एवंविधेषु काव्येषु शब्दाचित्रमंतरा न कोऽपि विशेषः । यद्यपि भवभूतिर्भावगांभीर्यद्योतनायोपमादीनर्थालंकारान् प्रयुंक्ते । तथापि सर्वोऽपि तद्रचनाचमत्कारः अभिधयैकवृत्त्या प्रदर्शितो दृश्यते, तथा न रसभावादिपारिपोषातिशयायालंकारणां विनियोजने समीक्षाव्यापारः क्वाचित्क एव ।

" उन्मीलितं तूलिकयैव चित्रं सूर्यांशुभिर्भिन्नमिवारविंदम् " इत्यादि कुमारसंभवस्थे पद्ये कालिदासेन स्तोकैरेव शब्दैः सुसुलभं सुललितं चित्रारविंददेवीवपुष्षु तूलिकासूर्यांशुनवयौवनेषु, उन्मीलनविकास-शरीरसुंदरावयवविभक्तिषु यच्चेतोहारि साधर्म्यं व्यंजनयैव प्रदर्शितम् , तेन च ये ये भावाः सूक्ष्मदृशा बुद्धावुद्भाविताः, या चानितरसाधारणी प्रतिभा प्रदर्शिता तत्र सहृदय एव प्रमाणम् । ईदृशमशब्दप्रतिपाद्यं सहृदयैकवेद्यमनवद्यं हृद्यं रसापेक्षयोपनिबध्यमानमौपम्यं नान्यत्र लभ्यमित्यत्र न कोऽपि संदेहः—

कालिदासः सहृदयान् अलंकारद्वारा व्यंग्यार्थविशेषान् वेदयति । अतः स एव सर्वमहान् कविः । रसभावादिव्यंजकत्वेनोपमाद्यलंकाराणां सन्निवेशनेन " सर्वे नवा इवाभांति मधुमास इव द्रुमाः " इति न्यायेन अपूर्वा शोभा संपद्यते । इदमेव हि कालिदासस्योपमायाः वैशिष्ट्यम् इति ।

---

# कालिदास-स्मरणम्

लेखकः—श्रीवटुकनाथशास्त्री खिस्ते साहित्याचार्यः
साहित्याध्यापकः—श्रीमारवाडी संस्कृत कॉलेजः काशी

भावुकान्तरमुवां विलासिके ! काव्यचिन्मयमहोविभासिके !
कालिदासवदनाब्जलासिके ! वागधीशि ! कविते !
नमोऽस्तु ते ॥ १ ॥

यां निपीय कविकोकिलोदिताम्
कर्णपर्णपुटपात्रसाधनैः ।
वाङ्मयीं नवसुधां बुधाधिपा
नाऽधुनाऽपि परितृप्तिमाययुः ॥ २ ॥

प्रत्नमप्यभिनवायते यया
वाङ्मयं सरसभावगाहनात् ।
तां वयं कविकुलाब्जमण्डली—
चण्डरश्मिसरणिं स्तुवीमहि ॥ ३ ॥

कालिदास ! वचनाधिदेवता—
वाग्विलासपदवी तवोचिता ।
नान्यथा सकललोकमोहने
विश्रुतं तव घटेत पाटवम् ॥ ४ ॥

लोकलोचनमनोविमोहिनी
रागिणामखिलकामदोहिनी ।
कालिदास ! तव भावुकानने
नृत्यतीव कवितानितंबिनी ॥ ५ ॥

केनचिद् जननजातसंचितानल्पपुण्यमयपूर्वसंपदा ।
रस्यते सुकविशर्वरीशितुः काव्यरश्म्यमृतसारमाधुरी ॥ ६ ॥
यद्यपीह कविनायकाः स्फुरद्वाङ्मया बहु वितेनिरे यशः ।
हन्त तैरपि शिरोभिरुह्यते कालिदासचरणांबुजद्वयी ॥ ७ ॥
केवलं न खलु भारतावनिः कालिदासयशसा सितीकृता ।
किन्तु हन्त सकला वसुन्धरा तद्यशस्सितदुकूलिनी बभौ ॥ ८ ॥
लौकिकी खलु कथा कथाऽतिगास्वादसिन्धुमुपयाति यद्वशात् ।
तत्कवित्वमिति गीयते बुधैः कालिदाकविता निदर्शनम् ॥ ९ ॥
शाणतां व्रजतु बाणभट्टको भारविर्भवतु भारविद्गिराम् ।
भूतिरस्तु भवभूतिवाङ्मये कालिदाससमता मता न तैः ॥ १० ॥
कालिदासकवितानिषेवणात् काव्यकन्दलसमुद्भवो नृणाम् ।
इत्युवाच कविकंठभूषणे क्षेमनामविदितः कवीश्वरः ॥ ११ ॥
धीधना ! ध्वनिविवेकधूर्धराः ! कालिदासवसुधासुधांबुधेः ।
तामिमां सुकविताभिधां सुधामुद्धृतां धयत धीसमृद्धये ॥ १२ ॥
पत्रिकामधुरवाण्युपास्यते यैर्गतिः सुरगिरां विकास्यते ।
तैर्वयं स्मरणतो महाकवेर्गाहिताः खलु कृतार्थतां शिवम् ॥ १३ ॥

---

## 'काव्येषु नाटकं रम्यं तत्रापि च शकुन्तला'



(लेः—प्राध्यापकः सखाराम रावजीभट एम्. ए., एम्. एड्. बेळगांव. )

परिचितमेवैतत्सुभाषितं सर्वेषां गीर्वाणभाषाविदाम् । कविकुलगुरुं कालिदासमधिकृत्य किंचिन्मया लेखनीयमिति मधुरवाणीसम्पादकमहाशयैः

सूचितम् । अत उपरितनं सुभाषितमुद्दिश्य मम विचारान्प्रकटयितुमुद्यतोऽस्मि । अस्मिन्श्लोकाविवरणे न किमप्यभिनवं मया लिख्यते, किन्तु ये केच विचारा मन्मनस्याविर्भवन्ति तानेव पत्रे आरोपयामि ।

सुभाषितस्य प्रथमे चरणे 'काव्येषु नाटकं रम्यम्' इति वर्णयता कविनैतत्सूचितं यन्नाटकं काव्यप्रकार एव । अन्यच्च सर्वेषु काव्यप्रकारेषु नाटकमतिरमणीयम् । अतः किं नाम काव्यं, कानि च तस्य लक्षणानि सन्तीत्येतद्विचारमर्हति । काव्यस्य लक्षणानि साहित्यकोविदैर्विविधैः प्रकारैर्वर्णितानि । तानि यथा—(१) रीतिरात्मा काव्यस्य—विशिष्टा पदरचना रीतिः । (२) काव्यस्यात्मा ध्वनिः । (३) तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि । (४) वाक्यं रसात्मकं काव्यम् । (५) रमणीयार्थप्रतिपादकः शब्दः काव्यम् । इत्येतानि लक्षणानि काव्यस्य द्विविधं स्वरूपमधिकृत्यैव लिखितानि । केचित् काव्यात्मानं श्रेष्ठतया वर्णयन्ति । केचित् काव्यशरीरं श्रेष्ठमिति मन्यन्ते । केचिच्चोभयोः श्रेष्ठत्वमभिलषन्ति । किन्तूपरिनिर्दिष्टं मतवैचित्र्यं वर्जयित्वा विचारित एतत्सत्यं प्रतिभाति यन्मनुजहृत्संवेदनानुकारि तथा चानिर्वचनीयानन्दोत्पादकं काव्यं सर्वश्रेष्ठं भवितुमर्हति । काव्यं त्रिविधम् खण्डकाव्यं महाकाव्यं नाटकं चेति । पूर्वसूरिभिः कविः सृष्टिनिर्मातारं ब्रह्माणमपि काव्यनिर्मित्या अतिशेत इति वर्णितम् । तद्यथा—

अपारे काव्यसंसारे कविरेकः प्रजापतिः ।
यथास्मै रोचते विश्वं तथा तत्परिवर्तते ॥

उपरितनानि काव्यलक्षणानि नाटकेऽपि वर्तन्त एव, किन्तु तस्मिन् किमप्यसाधारणं लक्षणं वर्तते येन सुभाषितकारः काव्येषु नाटकं रम्यमिति वर्णयति । काव्यपठनमपि नाटकमिव श्रोतृमनसि काव्यविषयानुसारिणं भावमुत्पादयति । रघुवंशगतेनाधोलिखितेनैतेन श्लोकेन स्पष्टं भवति ।

तद्गीतश्रवणैकाग्रा संसदश्रुमुखी बभौ ॥

किन्तु नाटकं न केवलं श्रवणीयमपितु दृश्यमपि भवति । अतः काव्यमिव नाटकं केवलं विदुषामेवाभिमतं न भवति, अपितु प्राकृतजनानामपि प्रियं भवति । यतो नाट्यदर्शनेन द्रष्टारो नाट्यविषयं समक्षमेवापतन्तं पश्यन्ति, विषयानुरूपं तं तं भावमनुभवन्ति च । 'नाट्यं भिन्नरुचेर्हि लोकमनसो ह्येकं समाराधनम्' इत्येतेन वाक्येनैतदेव स्पष्टीक्रियते । अतः प्रथमचरणान्तर्गतो विषय उपपन्न एव ।

द्वितीयचरणस्तु 'तत्रापि च शकुन्तला इति' भवति । सर्वेषां नाटकानां शाकुन्तलं श्रेष्ठं भवतीति कवेराशयः । विविधैः कविभिर्विविधानि नाटकानि रचितानि । तानि स्वस्ववैशिष्ट्यं धारयन्त्येव । किन्तु शाकुन्तलं रचयता कालिदासेनाप्रतिमं बुद्धिकौशलं चातुर्यं च दर्शितं भवति । तच्च पौर्वात्यैस्तथा पाश्चिमात्यैः पण्डितवरैः स्वीक्रियते । उपरिनिर्दिष्टे त्रिविधे काव्यस्वरूपे कालिदासेनानन्यसाधारणं कौशलं प्रकटीकृतम् मेघदूते नाम खण्डकाव्ये, रघुवंशे नाम महाकाव्ये, शाकुन्तले नाम नाटके च । कालिदासेन नाटकत्रयं रचितं यस्मिन् प्रेमरसः प्रामुख्येनानुस्यूतो वर्तते । किन्तु शाकुन्तले प्रेमरसस्यात्युच्चं स्वरूपं प्रकटितं दृश्यते । अन्ये रसा अपि शृङ्गाररसपोषकाः सन्ति । शाकुन्तले कालिदासेन वस्तुरचनायां, निसर्गवर्णने, विविधभूमिकानिर्माणे, बालस्त्रीस्वभावविज्ञाने, भाषाविलासे, कल्पनाविहारे चाद्वितीयं कौशलमाविष्कृतम् । अतः कालिदास एव कविकुलगुरुरिति विद्वांसो वर्णयन्ति । केचित्समीक्षका भवभूतिः कालिदासं नाट्यरचनयातिशेते इति मन्यन्ते । भवभूतिनापि नाटकत्रयं रचितम् । तस्य प्रज्ञापरिणतिरुत्तररामचरिते दृश्यते । तस्मिन् करुणरस एव प्राधान्येनान्तर्भूता वर्तते । तद्वर्णनेऽपि तेनासाधारणं कौशलं दर्शितम् । अधोलिखितैः श्लोकचरणैरेतत्स्पष्टीभवति ।

'अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्' ॥ ( रामस्य शोकेन )

'एको रसः करुण एव निमित्तभेदाद्भिन्नः पृथक्पृथगिवाश्रयते विवर्तान्' ॥
अस्मिन् विषये दुष्करं खलु निर्णयग्रहणम् । उभावपि कविश्रेष्ठौ स्वस्वनाट्यविषये सविशेषं गौरवास्पदम् इत्यस्ति न कोऽपि संशयः । शाकुन्तले कालिदासेन शृंगाररसानुकूलप्रेम्णः स्वरूपं तथा विशदीकृतं, यथाभिजनवती सुसंस्कृता

गृहिणी पवित्रमार्यस्त्रीसुलभं प्रेमाणविष्कृत्य सुखानिधानं कुर्यात् । कलात्मकतायामपि न किमप्यन्यन्नाटकं शाकुन्तलेन तुलामारोढुं समर्थम् । विविधाः प्रसंगास्तथा संनिवेशिता यथा ते सर्वे नाट्यवस्तुन एकात्मतां साधयन्ति । प्रत्यंकं कोऽपि निश्चितो हेतुराविष्क्रियते । न किमपि पात्रमनावश्यकम् । तथाच महान्तः प्रसंगा अपि कलात्मकतयोपयोजिताः । तथाच मनुजस्वभावज्ञाने लौकिकव्यवहारविज्ञाने च कालिदासस्य नैपुण्यमसाधारणमेव । अनुरूपभाषाप्रयोगेऽलंकारयोजने च शाकुन्तलस्य किमपि वैशिष्ट्यं वर्तते । अतः खलु सुभाषितकारः प्राह ' तत्रापि च शकुन्तला ' ।

सुभाषितस्य तृतीयचरणे शाकुन्तले चतुर्थोऽङ्क एव सर्वोत्तम इति ध्वन्यते । किं तर्हि तस्य वैशिष्ट्यम् । प्रथमं तावच्चतुर्थांकान्तर्गताः प्रसंगविशेषाः स्वाभाविकतया याथातथ्येन तथा प्रदर्शिता यथा वाचका द्रष्टारो वा तत्तत्प्रसंगानुरूपं भावनावैविध्यमनुभवन्ति । तृतीयेऽङ्के प्रधानरसत्वेनापि स्थितः शृंगारो यथा नियमिताविष्कारस्तथा चतुर्थांकान्तर्भूतः करुणरसोऽपि । कन्यापितृवियोगप्रसंगो द्रष्टुश्चित्तवृत्तिं शोकाकुलां कृत्वा तामेवानुभूतिमुत्पादयति । तथाच चतुर्थांके दुर्वाससः शापेन कथावस्तुपरिवर्तनं तथा कार्यते यथा वाचकस्य द्रष्टुर्वा मनो भाविनं परिणामं ज्ञातुमुत्कण्ठासाधारणं विलंबाक्षमत्वमनुभवति । कालिदासेन सचातुर्यं घटनान्तरप्रथनं कृतम् । अंगुलीयकस्यास्तित्वं तिरोभावः पुनर्लाभश्च इति त्रिविधा अवस्था सूचकतयोपयुज्य कालिदासेन नाट्यवस्तुप्रथने परिणामकारित्वं साधितम् । एवं चतुर्थांकः शाकुन्तले नाट्यरसोत्कर्षसाधनेन तथाच नाट्यवस्तुमध्यबिंदुत्वेन महत्वभाग्भवति ।

चतुर्थांकेऽपि श्लोकचतुष्टयं बहुमानमर्हति इति चरमेण चरणेन व्याख्यायते । के ते श्लोकाः । प्रथमः—यास्यत्यद्य शकुन्तलेति । द्वितीयः—शुश्रूषस्व गुरून्कुरु प्रिय........। तृतीयः—अभिजनवतो भर्तुः । चतुर्थः—भूत्वा चिराय चतुरन्त.............।

एतेषां प्रथमे श्लोके कन्यावियोगव्यथितजनकहृदयवैकल्यम् । द्वितीये गृहिणीपदप्रविविक्षुवधूजनोपदेशः । तृतीये राज्ञीपदोचितवैभवानुसारिकर्तव्यपूर्त्यानन्दः । चतुर्थे च पुत्रनिहितराज्यभारानुभूतसंसारसुखदम्पतीवानप्रस्थाश्रम-

प्रवेशः । एवं कालिदासेन श्लोकचतुष्टयेन शकुन्तलाया भाविसकलसंसारसौभाग्यं सूचितम् । एतत्सर्वं तेन सुश्लिष्टया भाषया समुचितलौकिकोदाहरणैश्च सम्यग्विवृतं, तेन 'वनौकसोऽपि सन्तो लौकिकज्ञा वयम्' इत्युक्तिरर्थ्यतां याति ।

केचित्समीक्षकाश्चतुर्थांकान्तर्गतश्लोकचतुष्टयमन्तरेण भिन्नमतयः सन्ति । यतो 'भिन्नरुचिर्हि लोक' इति न्यायः सुप्रतिष्ठित एव ।

अन्वर्था खलु शिरोलिखिता कविसूक्तिः ।

---

# कालिदासः

लेखकः—पण्डित जौहरीलालशर्म्मा सांख्ययोगाचार्यः
रिटायर्ड संस्कृत प्रोफेसर न्यू-दिल्ली

जनं जनेन जनिता जनं पाति जनेन यः ।
जनं जनेन हरति, तं कृष्णं भज साम्प्रतम् ॥

अथ कोऽयं कालिदासः ? कं देशमयं स्वजन्मना धन्यं चकार ? कं राजानमाश्रितः कदेति ? ।बहवः पक्षाः समुज्जृम्भन्ते तेषां समाधानमपि बहुशो विद्वद्भिः पूर्वत एव विदधे । अतोऽत्र स्थानसमयाभावात्तत्सर्वं विवादास्पदं विषयं विहाय सरलैव सरणिः सप्रमाणाऽवलम्ब्यते, यथा—

धन्वन्तरिक्षपणकामरसिंहशंकु-
वेतालभट्ट-घटखर्पर-कालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायाम्
रत्नानि वै वररुचिर्नव विक्रमस्य ?

एवं प्रसंगप्राप्तोऽयं महाकविः कालिदासः द्व्युत्तर-सहस्रद्वयमितप्रचलत्संवत्सरप्रवर्तकस्योज्जयिनी—राजधानी—सिंहासनारूढसम्राजो विक्रमादित्यस्य राजसभायां नवसु--एकतमं रत्नमासीत्तस्यैव चक्रवर्तिनः सभामलंचकारेति मतमेव साधीयः ।

सर्वशास्त्रपारंगतोऽयं महाकविर्जगतो यमुपकारं कृतवान् निजवाग्वैभवेनोत्तमग्रन्थरचनया सोऽवर्णनीयः । सर्वैरपि साधारणयोग्यताकविद्यार्थिभ्यः प्रारभ्य महाविद्वत्पर्यन्तं तत्प्रणीता रघुवंश-मेघदूतर्तुसंहार-कुमारसम्भव-विक्रमोर्वशीय-मालविकाग्निमित्राभिज्ञानशाकुन्तलादयो ग्रन्थाः सादरमधीयन्तेऽध्याप्यन्ते च ।

जगत्यां सत्स्वपिं लब्धप्रतिष्ठेष्वनेकानेककविषु तद्रचितकाव्येषु च कालिदास एव कविमूर्धन्यतया विराजते ' कविकालिदासः '=कविषु कालिदास इति समस्तपदात् । एवं तत्काव्यमपि ज्येष्ठं श्रेष्ठं च मन्तव्यम् । तथाहि काव्यं द्विविधं श्रव्यं दृश्यं च । तत्र श्रव्यं श्रवणीयं रघुवंशादि । दृश्यं नाटकम् अभिज्ञानशाकुन्तलादि, एतद्विषये भणितिरेका प्रसिद्धा विद्वत्समाजे

काव्येषु नाटकं रम्यं तत्र रम्या शकुन्तला ।
तत्रापि च चतुर्थोंकस्तत्र श्लोकचतुष्टयम् ॥ २ ॥

उत्तमोत्तमोपदेशभूयिष्ठकविताः प्रणीय महाकविकालिदासेन संसारिजना भृशमुपकृता अतस्तस्य कवि—मूर्द्धन्यत्वं तत्कवितायाश्च श्रेष्ठत्वं युक्तमेव।

कालिदासेन महर्षिकण्वमुखेन शकुन्तलायै पतिगृहं प्रति प्रेषणसमये य उपदेशः प्रत्तः स नारीजातेः कृते महोपकारकः सिद्धः, यत्र कुमार्या विवाहानन्तरं पतिगेहमवाप्य तत्रत्यजनैः सह कथं वर्तितव्यमिति विमलः कर्तव्याऽऽदर्शो निभालितः श्रावितश्च । यथा

शुश्रूषस्व गुरून्कुरु प्रियसखीवृत्तिं सपत्नीजने
पत्युर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी

यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः अभि ४-१८

एतन्नाटकं विदेशिनो विद्वांसोपि मुक्तकण्ठं प्रशशंसुः । तत्रैकः संस्कृत-विद्वान् A. A. Macdonll M. A. PH. D. महोदयः स्वरचित—संस्कृत-साहित्येतिहासे लिखति—

The greatest of all is Kalidas, already known to us as the author of sencral of the best kavyas. Three of his plays have heen preserved शकुन्तला, विक्रमोर्वशीय, & मालविकाऽग्निमित्र. The richness of creative fancy which he displays in these and his skill in the expression of tender feeling, assign hfm a higher place among the dramatists of the world

यथा कालिदासस्य उपमाः प्रसिद्धाः तथा तस्यान्यास्सूक्तयोपि लोकोक्तय एव सञ्जाताः ।

यथा—एकोऽपि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवांकः १
विषवृक्षोपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् २
पदं हि सर्वत्र गुणैर्निधीयते ३
पुराणमित्येव न साधु सर्वम् ४
सूर्ये तपत्यावरणाय दृष्टेः कल्पेत लोकस्य कथं तमिस्रा ५
आदानं हि विसर्गाय सतां वारिमुचामिव ६
हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः ७
मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः ८
आपन्नार्तिप्रशमनफलाः सम्पदो ह्युत्तमानाम् ९
केषां न स्यादभिमतफला प्रार्थना ह्युत्तमेषु १०
याञ्चा मोघा वरमधिगुणे नाधमे लब्धकामा ११
विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः १२
प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम् १३

न क्षुद्रोऽपि प्रथमसुकृतापेक्षया संश्रयाय,
प्राप्ते मित्रे भवति विमुखः किं पुनर्यस्तथोच्चैः १४.........

कालिदासस्य प्रकृति-निरीक्षणमपि शोभनम् । आधुनिकविज्ञान-वेत्तॄणां यन् Monsoon नाम्ना प्रसिद्धिमितं वर्षाकालीनवायुना निष्पन्नं बाष्पं पर्ज्जन्यरूपेण गतिमत्संलक्ष्यते तन्महाकवेर्विदितम्-तदित्थम् —

प्रवृत्तमात्रेण पयांसि पातु—
मावर्तवेगाद् भ्रमता घनेन ।
आभाति भूयिष्ठमयं समुद्रः
प्रमथ्यमानो गिरिणेव भूयः । र० १३-१४

गुरुभक्तेर्गोरक्षायाश्च पक्षपाती कालिदासः ।

प्राचीनकाले महर्षिवशिष्ठस्योपदेशेन महाराजो दिलीपः सुतावाप्तये गवाराधनरूपं व्रतं चचार, नृपाराधनसन्तुष्टा नन्दिनी नामर्षिधेनुः एकविंशे दिवसे कठिनपरीक्षोत्तीर्णं नृपं वरेण छन्दयामास यथा

" भक्त्या गुरौ मय्यनुकम्पया च प्रीतास्मि ते पुत्र वरं वृणीष्व ।
न केवलानां पयसां प्रसूतिमवेहि मां कामदुघां प्रसन्नाम् "
र. द्वि. ३३.

एवं राजापि—आराधितां गां प्रसन्नां विज्ञाय -

ततः समानीय स मानितार्थी हस्तौ स्वहस्तार्जितवीरशब्दः ।
वंशस्य कर्तारमनन्तकीर्तिं सुदक्षिणायां तनयं ययाचे ' ६४

सन्तुष्टया नन्दिन्यापि राज्ञे 'तथास्तु' इति पुत्रप्राप्तिरूपो वरः प्रतिश्रुतः ।

'सन्तानकामाय तथेति कामं राज्ञे प्रतिश्रुत्य पयस्विनी सा' ।

ततो राजा प्रसन्नहृदयः सुदक्षिणया राज्ञ्या सहितः अरुन्धतीसहायव सिष्ठेन महर्षिणा स्वस्त्ययनपूर्वकं साशीर्वादमभ्यनुज्ञातः

'प्रदक्षिणीकृत्य हुतं हुताशमनन्तरं भर्तुररुन्धतीं च ।

धेनुं सवत्सां च नृपः प्रतस्थे सन्मङ्गलोदग्रतरप्रभावः ' ७१

राजधानीं प्राप्तः पौरैरभिनन्द्यमानः राज्यधुरं बभार । यथाकालं पुत्रं रघुं च लेभे ।

एतत्सन्दर्भग्रथनद्वारा महामतिकालिदासेन ज्ञापितं यत्सर्वकामप्रदे गुरुभक्तिः गोसेवा च मनुष्यमात्रेणावश्यं करणीये इति ।

शास्त्रानुमोदितधनादिदानातिथिसत्कारौ कालिदासस्य सम्मतावास्ताम् । अतस्तत्सम्बन्धी सन्देशस्तेन स्वानुपमकाव्यद्वारा मानवजातिं प्रापितः । एकदा महाराजरघुं—

' तमध्वरे विश्वजिति क्षितीशं निःशेषविश्राणितकोषजातम् ।

उपात्तविद्यो गुरुदक्षिणार्थी कौत्सः प्रपेदे वरतन्तुशिष्यः र. ५—१

नृपोत्तमो रघुस्तु हिरण्मयपात्राभावाद् मृण्मये पात्रेऽर्घ्यादि निधाय कौत्समृषिं विधिवत् सम्पूज्य कुशलप्रश्नानन्तरं तदागमन—कारणं पप्रच्छ । साधुसत्कृतः कौत्स ऋषी रघोरुदारां वाणीं निशम्य ततः स्वार्थसिद्धिमनवेक्ष्य चोवाच—

'राजन् गुर्वर्थमहं भवतश्चतुर्दशकोटिस्वर्णमुद्रापरिमितं धनमाहर्तुं भवत्सकाशमागतोऽस्मि । परन्त्वितस्तन्नावाप्यान्यत्र गमिष्यामि ' ।

रघुस्तु निजापवादभयात् तं प्रत्युवाच, ' महर्षे ! अन्यत्र न गन्तव्यमित एव भवन्मनोरथपूर्तिर्भविष्यति, द्वित्राहाण्यत्र वस्तव्यमिति तं विश्वास्य यक्षाधिराजकुबेराद्बहुसंख्यं धनराशिमानाय्य महर्षिकौत्साय तत्समस्तमेव दिदेश । सोऽपि प्रीतमनाः—

पुत्रं लभस्वात्मगुणानुरूपं भवन्तमीड्यं भवतः पितेव ।
इत्थं प्रयुज्याशिषमग्रजन्मा राज्ञे प्रतीयाय गुरोः सकाशम् ३४

ततो ' राजापि लेभे सुतमाशु तस्मादालोकमर्कादिव जीवलोकः ' ३५

एवं दानेन महतां सपर्य्यया च लोकानां सर्वे मनोरथास्सिध्यन्तीति कवेः सन्देशः ।

कालिदासकवेरैतिहासिकज्ञानमपि पर्य्याप्तम्, तद्धि रघुवंशस्याष्टादश-

सर्गेषु रघुवंशीयमहाराजानाम् वंशवर्णने, तदितरभूभुजामप्यन्यत्र रघुदिग्विजयादिप्रसंगे च स्पष्टम् । यथात्र तद्दिग्दर्शनम्—

पौरस्त्यानेवमाक्रामन्.... । वंगानुत्खाय तरसा.... ।
प्रतिजग्राह कालिङ्गः.... । पारसीकांस्ततो जेतुम्
काम्बोजाः समरे सोढुम्.... । कामरूपेश्वरस्तस्य.... । (र. वं.)
प्रद्योतस्य प्रियदुहितरं वत्सराजोऽत्र जह्रे ।
हैमं तालद्रुमवनमभूदत्र तस्यैव राज्ञः ।
अत्रोद्भ्रान्तः किल नलगिरिस्तम्भमुत्पाट्य दर्पा —
दित्यागन्तूनरमयति जनो यत्र बन्धूनभिज्ञः ॥ पू. मे. ३५.

महाकवेर्भौगोलिकमपि ज्ञानं नैयून्यं नोपगतम् । तथाहि—चित्रकूट—पर्वतस्थः कश्चित्प्रवासी यक्षो वर्षाकालिकं मेघं दूतकर्मणि नियोजयन् तेनैव अलकापुरीस्थां स्वप्रियां प्रति स्वकुशलमयीं वार्तां हारयन् तद्गमननिमित्तं सरलमार्गं निर्दिशति—

गन्तव्या ते वसतिरलका,.... । जलधर महाकालमासाद्य काले.... ।

क्षेत्रमारुह्य मालम्.... । सानुमानाम्रकूटः.... । रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णाम्.... । सम्पत्स्यन्ते दशार्णाः (देशाः).... ।

नीचैराख्यं गिरिमधिवसेः... । वक्रः पन्था यदपि भवतः ।
मास्म भूरुज्जयिन्याः... । निर्विन्ध्यायाः पथि भव.... ।
ब्रह्मावर्तं जनपदमथ च्छायया गाहमानः ।
क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद् भजेथाः । पू. मे ५२
तस्माद्गच्छेरनुकनखलं शैलराजावतीर्णाम्
जन्होः कन्यां सगरतनयस्वर्गसोपानपङ्क्तिम् ५४
गत्वा चोर्ध्वं....कैलासस्यातिथिः स्याः ६२

तस्योत्संगे प्रणयिन इव स्त्रस्तगंगादुकूलाम्
न त्वं दृष्ट्वा न पुनरलकां ज्ञास्यसे कामचारिन् । ६७

एवं महाकविः कालिदासः शुद्धवंशोत्पन्नान्स्वर्गस्थदेवानामपि साहाय्यकारिणो रघुवंश्यमहाराजानुपलक्ष्य सर्वजनानेव सदाचारमार्गे प्रवर्तयन्नुद्युयुजे येन ते तथाचरन्तः सुखमाजो भवेयुः यथाहि—

सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम् ।
आसमुद्रक्षितीशानामानाकरथवर्त्मनाम् ६ र. १–५
यथाविधि हुताग्नीनां यथाकामार्चितार्थिनाम्
यथापराधदण्डानां यथाकालप्रबोधिनाम् ६
त्यागाय सम्भृतार्थानां सत्याय मितभाषिणाम् ।
यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् ७
शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।
वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ८
रघूणामन्वयं वक्ष्ये...

नीत्युपदेशः यथा फलप्राप्तिपर्यन्तं कर्म न कोऽप्यन्यो जानीयात् तथा कर्त्रा कर्म विधेयमन्यथा कार्यहानिशंका । वेदशास्त्रविहितयागहोमादि प्रत्यहं यथोक्तमवश्यं कार्यम् धर्मवृद्धेः । निजवित्तानुसारं गृहस्थेनातिथिसत्कारः करणीयः परोपकारधर्मलब्धेः । यस्य यादृशोऽपराधस्तस्य तादृशो दण्डो विधेयोऽन्यथा दोषः । ब्राह्मे मुहूर्ते एव सदा शय्यात उत्थातव्यमन्यथा पापसंश्लेषः । धनमर्जयित्वा सत्पात्रे तस्य विनियोगः कार्यो न तु केवलमिन्द्रियतृप्तये । मितभाषिणो जनस्यासत्यभाषणशंका नास्त्यतो मितभाषीभवेत् । यशसोऽर्थे परं विजिगीषेत् नतु परसन्तापाय, अन्यथाहिंसा दोषः । सन्तानोत्पादनार्थं विवाहः कार्यः नतु विषयभोगार्थमन्यथादोषः । बाल्यावस्थायामेव विद्याऽध्येतव्या येन वृथा कालो न गच्छेत् । युवावस्थापन्न एव विषयसुखभाग्भवेत्, प्राक् परतो वा कायक्षीणतासत्वात् । एवं वृद्धावस्थायां मुनिवृत्तिः—संसारत्यागी भवेत्, वैराग्यदार्ढ्यार्थम् मरणसमये तु पूर्वतोऽभ्यस्तयम-नियमासन-प्राणायाम प्रत्याहार-धारणा-ध्यान-समाधि-रूपाष्टांगयोगद्वारा देहमुत्सृज्य भगवत्सायुज्यमनन्तमुपभुंजानो जन्मसाफल्यमवाप्नुयात् । एवं महाकविकालिदासः काव्यप्रणयनद्वारा संसारस्य महान्तमुपकारमकरोत्, तस्य सम्मानं विदधती

सरलसरसवाचा भव्यभावान्दिशन्ती
विविधतमसुवृत्तैर्वाचकान्प्रीणयन्ती ।
बुध-कुल-पति-मान्या कीदृशी संस्तुताऽन्या,
जयतु ' मधुरवाणी ' कालिदासस्य धन्या १

इति शम् ।

---

# कालिदासप्रशंसा

ले. प. तर्कतीर्थ श्रीनीलकण्ठशिवाचार्यः बृहन्मठाध्यक्षः हूली सवदत्ती.

( पद्मबन्धः )

लब्ध्वा काव्यकलाकलापमतुलं श्रीकालिकानुग्रहात्
सम्मोदाय सतां कृतिं विरचयन् कीर्तिं सदा संश्रयन् ।
सद्भावप्रचुरप्रसिद्धकृतिभिः श्रीभारतीं तोषयन्
योऽसौ कश्चिदुपैति सत्कविनुतिं बन्धे विशेषाङ्कितः ॥ १ ॥

सुधासमुद्रो नियतं कलङ्कपाङ्कं सुधांशुं नितरां प्रसूते ।
काव्यामृताम्भोनिधिकालिदासः कलङ्कशून्यान्निजकाव्यचन्द्रान् ॥ २ ॥

( सुदर्शनचक्रबन्धः )

श्रद्धैकश्रितकर्मयोगनिरतं कालिप्रभालङ्कृतम्
प्रज्ञाविष्कृतविश्वकाव्यनियतिर्मोदास्पवाचस्पदा (?) ।
हृत्वा कुत्सितकाव्यकर्म नितरां व्यासर्षिकेन्द्रच्छविम्
विन्दन्तं श्रयति प्रसन्नहृदयं तं कालिदासं कविम् ॥ ३ ॥

## ( शिवलिङ्गबन्धः )

श्रीकालिदासः कविताविकासः श्रीशारदामोदमनोविलासः ।
पौराणकल्पैर्विसृतात्मकाव्यैर्विभासिलोकादियशःप्रकाशः ॥ ४ ॥

## ( त्रिशूलबन्धः )

सुधासिन्धौ यथा चन्द्र एक एव प्रकाशते ।
काव्याम्बुधौ तथा कालिदास एकः प्रकाशते ॥ ५ ॥

( कविरयं महाभागः कर्णाटकाभिजनः सरसलेखनकलाकुशलो नैकग्रन्थ-निर्माणसुप्रसिध्दो मधुरवाणीप्रणयी पंचस्वेतेषु पद्येषु प्रथमं पद्मबन्धरूपं तृतीयं सुदर्शनचक्रबन्धरूपं चतुर्थं शिवलिङ्गबन्धरूपं पञ्चमं त्रिशूलबन्धरूपं चेति तत्तदनुगुणचित्रशालिबन्धलेखनपुरस्सरं कार्यालयं प्राहिणोत् । तत्रतत्रस्थानं स्थूलरक्तवर्णयोजनेन कविकुलगुरोः प्रशंसा च संयोजिता । परं वर्णकेषु तत्तद्-बन्धानुरूपाक्षरयोजनकलावैकल्याद् यथाशुनाक्षरयोजना एव कृतेति । अतो मेधाविनो वाचका बन्धान् आकलयन्तु स्वमनीषयेत्यावेदयामो वयम् ।

सम्पादकः

---

# मेघदूतम्

मू. ले. स्व. कवीन्द्रो रवीन्द्रः अनुवादकः कवशिः शशीशः

आरामगिरेराहिमाचलं प्राचीनभारतवर्षस्य विशालप्रदेशे मेघदूतीय-मन्दाक्रान्तावृत्तकुल्यया निरस्यन्दत्सवेगं हृदयङ्गमः स्मरणमात्रेणाऽपि रोमाञ्च-कारी नवचैतन्यावहश्चैको जीवनप्रवाहः कालिदासदिव्यप्रतिभासरस्याः । परमद्य तस्मात्प्रदेशात्तस्मात्प्रवाहाच्च न केवलं वर्षाकाले, सर्वकालेऽपि वयं सार्धचन्द्रमपवाहिताः । तस्मिन् प्रदेशे सूचिभिन्नैः केतकीकुसुमैरुपवनानि व्यलसन् । समासन्ने वर्षासमये ग्रामचैत्येषु ( चतुर्वीथीमध्यवृक्षेषु ) गृहबलि-

भुजो वायसा विरचयन्ति स्म नीडान् । ग्रामसमीपप्रान्तं जम्बूवनपरिणतफलैः श्यामतामयासीत् । सोऽयं दशार्णदेशः कदानीमास्ते ? । किंच अवन्ती— यस्यां वृद्धलोका उदयन—वासवदत्तयोःकथां कथयन्ति स्म—साऽपि कुत्र वा दृश्यतेऽधुना ? । तथा शिप्रातीरवर्तिनी साऽप्युज्जयिनी ? । सा खलु लक्ष्म्याः कुलगृहमेव । तस्या विपणिषु कोटिशो रत्नहारान्, मरकतमणीन्, विद्रुमराशींश्च विक्रीणाना वणिजः क्रीणानाश्च श्रीला आसन् । तस्या ऐश्वर्यमत्यद्भुतमेव बभूव । परमद्य तस्या विस्तृतवर्णनं वाचयतामप्यस्माकं सा नो न स्फुरति नयनयोः पुरतः । पूर्वमस्या नगर्या हर्म्येभ्यो ललितवनिताकेशसंस्कारधूपपरिमलः प्रसरति स्म बहुदूरम् । अधुना केवलं तस्य सूक्ष्मो गन्ध एव किंचिदाघ्रायतेऽस्माभिः ।

तस्मिन् समये अन्धकारमय्यां रजन्यां स्वपन्ति स्म पारावताः प्रासादशिखरेषु । तस्या धन—जनविशालाया विशालाया ( उज्जयिन्याः ) रात्रिकाले निर्जनो मार्गः, प्रसृतं च निद्रादेवीसाम्राज्यं तदेतत्सर्वस्य केवलमस्फुटा कल्पना समुदेति नः । संवृतेषु सर्वेषु प्रासादवातायनेषु, उभयपार्श्वगतहर्म्येषु निश्शब्देषु तस्या नगर्याः शून्यराजपथे सान्द्रान्धकारे प्रियकरसमागमार्थं गच्छन्त्योऽभिसारिकाः भीरवो बिभ्यति स्म । कम्पन्ते स्म तासां हृदयानि । ताः कल्पयन्ति स्म चेतसि—तिमिरसमयेऽस्मिन् मार्गदर्शनार्थं निकषोपले सुवर्णरेखेव तेजस्विनी सौदामनी चरणयोः समीप एवास्माकं यदि परिस्फुरेत्तर्हि महदेवानुकूल्यं स्यादिति । तदिदं रमणीयं चित्रमस्फुटतया दृश्यते मनश्चक्षुषा ।

किंच प्राचीनभरतखण्डस्थास्ता नद्यस्ते पर्वतास्ता नगर्यश्च कियद्वा रमणीयाः । तेषां सर्वेषां नामान्यपि कियद्वा मोहकानि । अवन्ती—विदिशोज्जयिनी—रेवा—शिप्रा—वेत्रवतीत्यादिनामसु विभिन्नप्रकाराऽपूर्वा शोभा, ललितो विलासः परमं पावित्र्यं च परिपूरितम् । ततोऽर्वाचीनोऽयं कालः क्रमेण विगतपावित्र्यो दूषितश्चाभवत् । प्राक्कालीनाया भाषाया, व्यवहाररीतेर्मनोवृत्तेश्च जीर्णताऽपभ्रष्टता च समासन्ना । अधुनातनानि नामानि केषांचिदाधुनिकानां भासन्तां नाम समयानुरूपाणि । परमस्माकमेवं भाति—रेवा—शिप्रा—निर्विन्ध्यादिनदीतीरे विलसदवन्ती—विदिशादिनगरीगामी कोऽप्येकोऽपि पन्थाः

स्यादद्यापि वेति । यदि स्यात्तर्हि अद्य चतुर्दिक्षु प्रसृतात्कोलाहलात्पादमुध्दृत्य तत्प्रदेशं गन्तुं शक्येत । तत्र पर्याप्ता विश्रान्तिरपि लभ्येत ।

अनयैव कल्पनया यक्षप्रेषिते मेघे पर्वत-नदी-नगरीणामुपरि गच्छति, यक्षेण सह वाचकानामपि विरहव्याकुलतया प्रसरन्ति दीर्घनिश्श्वासाः । यस्मिन्समये जनपदवधूनां प्रीतिस्निग्धानि लोचनानि नाजानन् भ्रूविलासान्, नगरविलासिन्यो भ्रूविभ्रमकौशल्यमदर्शयन्, सान्द्रपक्ष्मोत्क्षेपात्कृष्णशार-प्रभाणामक्ष्णां मधुकरश्रेणिदीर्घानक्षिपन् कटाक्षान्, तत्कालीयभारतवर्षादन्तरिता वयमिदानीम् । अधुना तस्मिन्प्रदेशे कालिदासमेघं विना न कमप्यपरं दूतं शक्यते प्रेषयितुम् ।

आङ्ग्लकविसूक्तिरिदानीं स्मर्यते-'प्रियमानवेषु दूर-दूरदेशेष्विव महदन्तरं वर्तते ' इति । तेषां मध्ये अश्रुमयो बिशालः क्षार समुद्रः प्रसृत इव । दूरादन्तरात्ते परस्परमवलोकयन्तियदा, तदा तेषां प्रतिभाति 'कदापि वाऽप्येकदा कस्मिन्नपि एकस्मिन् महति प्रदेशे एकत्र सम्मिलिता अभवाम' इति । परमधुना कस्यापि वा शापेनास्मासु विरहशोकसागरः समासन्नः । तेन सागरेण वेष्ठितादाधुनिकाज्जगतो यदा वयं मेघदूतकाव्यगतं भूतकालिकं पश्यामः प्रदेशं-तदा दृश्यमेवं दृश्यते कल्पनादृशा-तस्याः शिप्रासरितस्तीरोद्यानेषु पुष्पाण्यवचिन्वानाः सुन्दरस्त्रियः सञ्चरन्तीततस्ततः । उज्जयिनीनगरे चत्वरेषु ये वृद्धा उदयनराजस्य रम्याद्भुतकथाभी रमयन्ति स्मागन्तून्, आषाढमासे नवजलधरमबलोक्य ये प्रवासिनः प्रियाविरहवेदनया व्याकुला अभवन् तेषां सर्वेषामद्यापि यः कोऽपि वा सम्बन्धोऽस्माभिः समघटिष्यत तर्हि महानेव सौभाग्योदयः समभविष्यत्नः । तेष्वस्मासु च मनुष्यत्वरूपेणैक्ये विद्यमानेऽपि कालरूपाच्छेद्य-जवनिकया वयं ते च परस्परं दूरान्तरिताः । अधुना स भूतकालीया रमणीया चालकानगरी कविकुलगुरोः कालिदासस्य करुणया स्फुरति पुरतो नः । विरह-विच्छिन्नाद्वर्तमानकालिकान्मर्त्यलोकात्तत्प्रदेशं कल्पनादूतीं प्रेषयितुं प्रभवामः ।

परं समग्रस्य भूतकूलस्य वर्तमानकालात्मना परिणतिरसंभाविनी । भिन्न-कालिकमानवेषु अनुल्लङ्घनीयो विरहगर्तो वर्तते महान् । वयं यान् दिदृक्षामस्ते मानससरसो वसन्ति दुर्गमे तीरे । तत्प्रान्तं प्रति केवलं कल्पनामेव

प्रेषयितुं शक्यम्, तत्र सशरीरं गन्तुं नास्ति पन्थाः। वयं क, ते क? । मध्ये-कदाप्यनुच्छेद्यं विद्यते महदन्तरम्। तदुच्छेत्तुं को वा क्षमः? । अनन्तसीम्नि स्थितमविनश्वरं भूतकालरूपं पुरुषं साक्षात्कर्तुं को वा शक्नुयात्। अद्य पुनर्भाषायां, भावनायामाभासे, सूचनायां, भ्रमेच भूतकाले दृश्यतेऽविशदतया।

भित्वा सद्यः किसलयपुटान् देवदारुद्रमाणां
ये तत्क्षीरस्रुतिसुरभयो दक्षिणेन प्रवृत्ताः।
आलिङ्ग्यन्ते गुणवति! मया ते तुषाराद्रिवाताः
पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ॥ (उत्तरमेघ. ४४)

एतत्पद्यवर्णितमनुसृत्य अयि! भूतकाल! तवाङ्गस्पर्शिनो दक्षिणेन वहतो वायोरेकाऽपि लहरी मदङ्गं परामृशेत्तर्ह्यपि जानाम्यात्मानं भाग्यवन्तम्। विरहग्रस्तलोके इतोऽप्यधिकामाशामेव कर्तुमनुचितम्।

वयं सर्वे यक्ष इवैकस्मिन् गिरिशिखरे रहस्यास्महे दिशमुत्तरां वीक्षमाणाः। अन्तराले मेघाकाशादिजवनिका। तत्परतो भूतकालीयं भूगतं रेवाशिप्राऽवन्त्युज्जयिनी--सुख--सौन्दर्य--भोगैश्वर्यादीनां सर्वेषां रमणीयानि विद्योतन्ते चित्राणि। कल्पनासखी तच्चित्राण्यङ्गुल्या निर्दिशति दूरादेव। परं न शक्नोति सन्निधापयितुम्। उद्भावयति मनस्याकाङ्क्षाम्, न पुनस्तृप्तिं विधातुमीष्टे।

अयि! निर्जनगिरिशिखरवर्तिन्! विरहिजन! यां त्वमालिङ्गितवानसि स्वप्ने, यां प्रति प्राहिणोर्मेघद्वारा सन्देशं तया प्रेयस्या सहैकस्मिन्नपूर्वसौन्दर्य-लोके शरत्पौर्णिमाया रजन्यां तव पुनश्चिरमीलनं भवेदिति को वा त्वामाश्वासितवान्। चेतनाचेतनयोर्भेदमेव न जानासि त्वम्, तदा कथं न विस्मृतवान् सत्य-कल्पनयोर्भिदाम्।

---

# संपादकालोकः

अथ किल दशमवत्सरीयं मधुरवाण्याश्चरममङ्कं वाचकेभ्यः समर्पयितुं सन्तुष्यति सङ्कुचति त्रपते च चेतः । कालिदासविशिष्टाङ्कदानेन सन्तोषः, सप्तसु मासेषु बृहदाकारस्याप्येकस्यैवाङ्कस्य समर्पणेन सङ्कोचः, नियतसमयेऽङ्काप्रकाशनेन त्रपा चेति त्रयं सममेव समास्कन्द्याकुलयति मनः । हन्त ! वयमपि किं कुर्महे परिस्थितिपराधीनाः । यावदङ्कप्रकाशने व्यापृताः यदि स्याम वयम् तर्हि एकादशवत्सरेऽप्यव्यवस्था दृढमूला भवेदिति भीत्या सङ्कुचन्तोऽपि त्रपमाणा अपि वाचकोदारमनस्कतावलम्बधैर्येण व्यरमाम निश्चितादपि व्यापारात् । कालवैकल्यात्केषाञ्चन विद्वदग्रेसराणां लेखप्रकाशने नापारयाम वयमिति निवेदयितुं विषीदति मानसं नः । क्षमामभ्यर्थयामस्तेषाम् । समाश्वासयामश्च तान् एकादशवर्षे क्रमेण तल्लेखप्रकाशनाभिवचनेन ।

अङ्केऽस्मिन् प्रकटितानां लेखानां सिंहावलोकनं विधेयमिति महत्यासीदुत्कण्ठा, परं विलम्बभिया नाशक्नुवाम समीहितसाधने ।

कालिदासविशिष्टाङ्कप्रकाशने श्रीवाराणसीक्षेत्रवासिनां सदा दानप्रवृत्तानामपि मदलेशविरहेण विजितवारणानां पराजितकर्णानां सुरभारतीप्रसारप्रत्यूहनिवारणाय बद्धकङ्कणानां नैजधनेन संस्थापितसंस्कृतमहाविद्यालयानां प्रकटितनैकप्राचीनग्रन्थानां महोदाराणां **श्रीगौरीशङ्करगोयनका** महोदयानां मधुरवाण्यां चाकारणप्रेम्णा विशेषतः साहाय्यदानमेवासीत्सर्वथा प्रेरकं कार्यनिर्वाहक्षमं च । न यदीमे महाभागा व्यतरिष्यन् साहाय्यविशेषं तर्हि न केनाप्यकृतपूर्वं साहसं विधातुं न प्राभविष्यदबला मधुरवाणी । तदेतद्विशिष्टाङ्कप्रकाशनश्रेयः सर्वात्मना सर्वथा प्राप्नोति तानेव महोदयानिति समर्पयामस्तेभ्यः शुभाशीस्सहकृतान्सहस्रशो धन्यवादान् समं वाचकैर्वयं सानन्दं साभिनन्दनं च । मधुरवाण्यामेषां मूर्तिमत्सौजन्यानामसाधारणः प्रणयः । प्राच्यविद्यागरिषन्निमित्तं वाराणसीक्षेत्रमुपगतं मामपरिचितमपि विनयेन साधु समादृत्य सूक्तिसुधासारैराप्लाव्य कृतज्ञताभारावनतशिरसमकार्षुः । तान्यमृतमयान्यक्षराण्यधुनाऽ

पि हृदयसागरमुद्वेलयन्तीमानि—'यदि मधुरवाणी काश्यां प्रकाश्येत, तर्हि सर्वोऽपि भारो मयैकेनोह्यते' इति। अहो! उदारताया निस्सीमता। अहो सुरसरस्वत्या अनन्यदृशी समुन्नतितत्परता। अहो मधुरवाण्यामकारणोऽसाधारणः प्रणयः। ईदृशामेव प्रेमाणं निरन्तरमाकाङ्क्षामहेऽधितकरम् कार्यक्षमोत्साहवर्धकम्। आशास्महे चाखण्डायुरारोग्यैश्वर्यादिसकलश्रेयःपरम्पराम्। विरलवाचकानां भोगैकमग्नराजाश्रयविधुराणां संस्कृतपत्रिकाणामीदृशा एव वदान्यवरेण्याः शरणम्, जीवनदायिनश्च। एवमेवान्ये श्रीलाः साहाय्यविशेषं विदध्युस्तर्हि प्रतिवत्सरं क्रमेण भास-भवभूति-भारवि-भट्टबाण-श्रीहर्षादिकवीश्वरविषयकविशिष्टाङ्कप्रकाशने समुत्सहते मधुरवाणी। अनेन विशिष्टाङ्केन वाचकमहोदयाः संन्तुष्य मधुरवाणीं क्षमेयुः पूर्ववदनुगृह्णीयुश्चेति विश्वसिमः प्रार्थयामश्च।

दानशौण्डीरतया दिगन्तप्रथितयशसाममीषां श्रीगोयनकामहाभागानामल्पोऽपि परिचयः प्रतिकृतिश्च मधुरवाण्यां प्रकाशनीये इति बलवती ह्यासीन्मनीषा नः। विहितश्चासकृन्महीयान्प्रयत्नः। परं नापेदिवान् सफलताम्। तथाऽपि ईदृश्येव प्रसङ्गान्तरे मनोरथमात्मीयं साध्नुवामेति प्रत्याशा नः।

---

# प्रमादपरिमार्जनम्

सर्वथाऽप्रमादाय चक्षुषि तैलं निक्षिप्य जागरूकाणामपि तत्रापि व्यग्रताजटिलवृत्तपत्रव्यवसायिनां संभवन्त्येव क्वचिदपि प्रायः प्रमादाः। किं पुनः सम्भ्रान्तचेतसामविषह्यदुःखव्याकुलहृदाम्। रुग्णशय्यामधिशयानानामपि देशभक्तानां दादाभायीनौरोजिमहाशयानां मरणात्प्रागेव सरसो हृदयविदारकश्च मृत्युलेखो व्यलेखि केनचित्प्रसिद्धपत्रेणेति श्रूयते। तथैव महीयान्प्रमादोऽस्माभिरतीते सम्मेलनाङ्के कृत इति विषीदति चेतः। अतीततारणसंवत्सरे

मधुरवाण्याः प्रथमे कार्तिकाङ्के प्रकाशमुपगते, तदनु नैकविधप्रत्यूहपरम्परा-प्रतिहताः यावदापार्थिववत्सरवैशाखं द्वितीयाङ्कप्रकाशनेऽपारयन्तो वाचक-मनोवैरस्यभिया प्रथममेव नितान्तमास्म सम्भ्रान्ता वयम्। ततश्च 'गण्डस्योपरि पिटकः संवृत्तः' 'क्षते क्षारामिव' इति न्यायद्वयमनुसृत्य श्रीमत्पूज्य-पादानां पण्डितप्रकाण्डानां प्रातस्स्मरणीयनामधेयानां गुरुसार्वभौमाणां श्रीम-दुत्तरादिमठाधीश्वराणां श्रीश्री**सत्यप्रज्ञ**त्यन्वर्थितनामधेयानां मुनिवृन्दवृन्दार-काणां श्रीश्रीचरणानामकालेऽकल्पितमेव वैकुण्ठपुरगमनमाकर्ण्य वज्राघातेनेव नितरां विह्वलितान्तःकरणा अभूम वयम्। अङ्कविलम्बसम्भ्रमेण श्रीगुरुचरण-वियोगवेदनया च विह्वलीकृतचेतोभिरस्माभिः **पार्थिवसंवत्सरचैत्रशुक्ल-प्रतिपदि** वैकुण्ठलोकं गतवतां श्रीगुरुचरणानां भूलोकत्यागवार्ता तारणसंवत्सरस्य मार्गशीर्षादिफाल्गुनान्तमासीये सम्मेलनाङ्के 'अतीते चैत्रशुक्लप्रतिपदि' इति प्रमादात्प्रकाशितमस्माभिः। तदेतत्प्रामादिकमपराधमघतनाः श्रीमदुत्तरादि-मठाधीश्वराः श्रीश्रीसत्याभिज्ञतीर्थश्रीमच्चरणाः सहजया करुणया वा, स्वाभा-विक्या उदारबुद्ध्या वा निर्व्याजेन शिष्यवात्सल्येन वा क्षाम्यन्तुतमामनु गृह्णन्तुतमामिति सानन्तप्रणामं साञ्चलिबन्धं साञ्जलिप्रसरं च प्रार्थयामहे मुहुर्मुहुः।

---

# बलवती खलु भवितव्यता

नियतसमये प्रकाशयितुमात्मानं कृतप्रतिज्ञापि शतशःकृतप्रयत्नाऽपि नितान्तं समुत्सुकाऽपि मधुरवाणी, बद्धपरिकरेष्वपि संपादकेषु साहाय्य-दानानुग्रहोन्मुखेष्वपि वदान्यग्राहकेषु नववर्षेषु कृतार्थाऽपि दशमवर्षे मनोरथ-मात्मीयं पाठकानां च पूरयितुं नापारयदित्यहो बलवत्ता भवितव्यतायाः।

जगति दैव-प्रयत्नयोर्बलवत्ताविषये सत्यपि वादकोलाहले दैवमेव—भवितव्यतैव बलवतीत्यन्ततो गत्वा जानन्त्येव स्वानुभवेनापामरं सर्वे जनाः।

भवितव्यतावशादेव शूराग्रेसरा अपि न्यायपथैकगामिनोऽपि देवानुग्रहभाजनीभूता अपि समृद्धसम्पत्तयोऽपि नल—हरिश्चन्द्र—युधिष्ठिरप्रभृतयो महात्मानो राजानः कां वा दुस्सहां दशामन्वभवन्निति विदन्त्येव भारतीयाः। सकलसामग्रीसंपन्नोऽपि नव—नवगुप्तास्त्राविष्कारेण विस्मापितविश्वोऽपि दिङ्मूढीकृतविपक्षोऽपि जर्मन-देशो यदचिरान्निर्नामतामयासीत्तदपि भवितव्यताविलसितमेव। एषाहि भवितव्यता भञ्जयति दृढामपि प्रतिज्ञां धीराणाम्। ध्वंसयति रम्यान् मनोरथान्। अपहस्तयति भूरिप्रयत्नान्। न केवलमसतामेव पथि नास्तृणोति कण्टकान्परं सतामपि। स्वच्छन्दचारिणी चैषा नावेक्षते लोकोपकारक्षमान्। नापि पश्यति सदुद्देशान्। न चावलोकते कार्यमहतीम्। न वा निशामयति धर्मम्। न वालोचयति पुण्यानि कर्माणि। नापि मनस्याकलयति ज्ञानमहतीम्। न वा गणयति गुणगरिमाणम्। एवमनया नियत्या आयत्तीकृतासु महामहाव्यक्तिषु वराक्या मधुरवाण्याः का कथा। तदेवं बलवत्तरस्य भवितव्यतानियमस्य कथमात्मानमपवादीकर्तुं प्रभवेदल्पसारा मधुरवाणीति वाचकविचक्षणा एव विचारयन्तु चेतसि।

दशमवर्षारम्भे सर्वकारस्य नियन्त्रणया पर्याप्तलिपिपत्रा (कागद) णामलाभेनागत्याऽकृशोत्साहाऽपि कृशशरीरेव त्रपया वाचकजनमनुप्राप्ता मधुरवाणी। तदनु दीर्घप्रयत्नेन सर्वकारानुमत्या यावदासादयति विपुलं लिपिपत्राणि हन्त! तावदेव 'छिद्रेष्वनर्था बहुलीभवन्ती' ति न्यायेन वर्णयोजकानां (कम्पोझिटर) दौर्लभ्यदोषग्रहणग्रस्ता मधुरवाणी षण्मासपर्यन्तं न प्राभवदात्मप्रकाशने। ततश्च पूर्वतश्चतुर्गुणवेतनदानेनाक्षरयोजकं कथमपि संपाद्य प्राचीकशाम वयं मधुरवाण्या बहुपुटं सम्मेलनाङ्कम्। तदनु यथाप्रतिज्ञं कालिदासाङ्कमुद्रणमारब्धम्, आसन्नशतपत्राणि यावन्मुद्रितानि तावन्मधुरवाणीशाश्वतनिधिसङ्ग्रहप्रत्याशया मोहमयीनगरगमनप्रसङ्गः समापतितोऽस्माकम्। तत्र न तावत्तादृशं कार्यं निष्पन्नम्। परं व्यतीतो मासाधिकः समयः। अतः सम्पादकद्वयप्रवासात्पुनर्मुद्रणकार्यं प्रतिबद्धमेव। एवं च प्रथमं लिपिपत्रदौर्लभ्येन, ततो वर्णयोजकवैकल्येनाथ मोहमयीप्रवासेन च नियतसमये नियतानङ्कानाविर्भावयितुं कथंचिदपि न शक्यमासीत्। एवं प्रत्यूहत्रयस्मारणार्थमिव वर्षेऽस्मिन् अङ्कत्रयमेवाविष्कृतवती मधुरवाणी प्रतिवत्सरं प्रदेय-

पत्रात्मकं बृहद्विशिष्टाङ्कं प्रदाय ग्राहकार्णमोचने मतिमबध्नीम । परं तथाऽनुष्ठितेऽवकाशविरहादेकादशो वत्सरोपि पुनरव्यवस्थादोषाकुलितो वाचकानां चेतसि वैरस्यमुद्वेगमौदासीन्यं च सममेवोत्पादयेदिति भीतिरस्मान्यवर्तयद्विलम्बानुबन्धिनो व्यापारात् । ततश्च दशमवर्षान्तिमदिनपर्यन्तं यावतां शक्यमासीन्मुद्रणं पत्राणां तावत्पत्रात्मक एव प्रकटीकृतः कालिदासाङ्को न त्वधिकावरः । एवंच प्रत्यूहपरम्परया अनियतकालमनियतपत्रात्मकाननियतांश्चाङ्कान्प्रकाश्य वाचकरोषभाजनतामगमन्मधुरवाणी । सहृदयाः सदया वाचकमहोदयाः सत्यां परिस्थितिं विज्ञाय क्षमेरन्नेव मधुरवाणीं पूर्ववदनुकम्पेरन्नेवेति दृढीयान्नः प्रत्ययः । विलम्बभयादेव कालिदासाङ्केऽवश्यं प्रकटनीयानां सरसतमानां संप्रार्थ्य समुपाहृतानामपि प्रथित विद्वत्तल्लजलेखानामवकाशदाने नापारिमधुरवाण्येति चेखिद्यते चेतः । तत्कृते क्षमापयामस्तान्विद्वन्मूर्धन्यान् । आश्वासयामश्च प्रत्यङ्कं क्रमेण तल्लेखप्रकाशनप्रतिज्ञया ।

तदेतदव्यवस्थामूलहेतोर्मधुरवाणीसांपत्तिकपरिस्थितेरपि प्रासङ्गिके विचारः करणीयः । प्रथमं संस्कृतपत्राणां विरला एव वाचकाः । विरलतराश्च प्रार्थनयाऽपि मूल्यप्रेषिणः । विरलतमाश्च अप्रार्थिता अपि स्वयं धनप्रदायिनः । तथा बहुला 'व्ही. पी.' विधिमाकाङ्क्षमाणाः । बहुलतराश्च तत्परावर्तनपराक्रमशालिनः । बहुलतमाश्च विधि—निषेधशून्यतया आशा—निराशापर्यायानुभाविनो मौनावलम्बिनः । इतश्च समरनिमित्तेन वा वणिजां स्वार्थान्धतातिरेकेण वा सकलान्यपि वस्तूनि सीमातिगमूल्यानि विशेषतो मुद्रणोपयुक्तानि । कर्मकारिणश्चतुर्गुणितवेतनवितरणेऽपि दुर्लभाः सञ्जाताः । एवं च परिस्थित्यां समये अप्रकाशनदोषः कथं स्पृशेत्केवलं मधुरवाणीमित्येतदपि विचारणीयम् । तथाऽपि आत्मानमेवापराधिनं मन्यमाना मधुरवाणी त्रपया दशमवर्षीयं मूल्यं प्रार्थयितुमपि न धैर्यमाधत्ते । यदि कृपया वाचकाः प्रेषयेयुर्मूल्यं तर्हि सादरं सोपकारस्मरणं सानन्दं च स्वीकरिष्यत्येव । परं नाधिकारेण प्रार्थयते । तदस्मिन्विषये यदुचितं तत्करिष्यन्त्येवोदारा वाचका इति दृढं भावयत्येषा । एकादशे वत्सरे सुव्यवस्थयाऽऽत्मानं प्रकाशयितुमेव मधुरवाणी दशमहायनावसाने सङ्कोचदोषमगत्याऽङ्गीकृतवतीत्युपरितनप्रस्तावनया ज्ञायत एव विचक्षणैर्वाचकवरेण्यैः ।

पुनरेषा परिस्थितिर्मा परापतेदिति, स्वायत्तं मुद्रणालयं तदनुकूलसामग्रीजातमावश्यकं चापेक्षमाणा मधुरवाणी तत्पर्याप्तधनसंपादनकर्माणि प्रवृत्तेयमिदानीम् । यदि स्वाधीनमभविष्यन्मुद्रणादिसौकर्यं तर्हि नेदृशीमवस्थां कदाप्यन्वभविष्यन्मधुरवाणी । तत्पर्याप्तधनं संस्कृतप्रणयिभ्यो वदान्येभ्यो न दुरधिगमम् । ग्राहकेष्वपि प्रत्येकं यथानुकूल्यं दशपञ्चविंशति–पञ्चाशच्छतरूप्याणि प्रददीरंस्तर्हि महीयानंशोऽचिरादेव परिपूरितः स्यात् । अत्रान्तरे तदस्मिन्कर्मणि स्वयमेव मार्गदर्शितया पुरस्सृत्य केचिन्महोदारा अभिनन्दनीयगुणाः महाभागाः साहाय्यविशेषं व्यदधुरिति निवेदयितुं महीयान्नः प्रमोदः

| त इमे महाभागाः | रूप्याणि |
|---|---|
| १ मोहमयीवरिष्ठन्यायाधीशाः श्रीलौकूरमहाभागाः | १०० |
| २ मोहमयीवरिष्ठन्यायाधीशाः श्रीगजेन्द्रगडमहोदयाः | १०० |
| ३ वाणिज्यविख्याताः श्रीशेटचिरञ्जीवलालमहोदयाः | १०० |
| ४ प्रसिद्धवाक्कीलव्यवसायिनः श्रीजहागीरदारहोदयाः | २५ |
| ५ विख्यातपाश्चात्यवैद्यविद्यानिष्णाताः श्रीजोसी महाभागाः | २५ |

एवमन्यैरपि महाभागैः साहाय्यविशेषदाने प्रतिश्रुतम् । एवमितरेऽपि संस्कृतप्रणयिनः साहाय्यदाने मतिमाबध्नीरन् तर्हि अचिरादेव 'हा' इति शब्दोच्चारणसमये एव सङ्कल्पितादप्याधिकं धनं राशीभवेदेवेति नात्र संशीतिलेशोऽपि । सम्मिलिते च पर्याप्ते वित्ते, स्वाधीने च मुद्रणालये मधुरवाणी सर्वाङ्गरमणीया करणीया, अपरमेकं संस्कृतसाप्ताहिकं प्रचालनीयम्, आंग्लभाषायां प्रान्तीयभाषायां च संस्कृतिसंरक्षणाय संस्कृतसंवर्धनाय च संशोधनात्मकैर्लेखैरुपबृंहितस्य त्रैमासिकपत्रस्य प्रकाशनं कर्तव्यं, तथा अमुद्रितोत्तमग्रन्थप्रकाशनमपि कार्यमिति महीयांसोऽस्माकं सन्ति मनोरथाः । तत्सफलतापादनं वदान्यसंस्कृतप्रणयिजनचित्तायत्तं, तच्चित्तं च चिदानन्दविग्रहस्य नन्दनन्दस्यायत्तमिति तमेव सभक्त्युन्मेषं संप्रार्थयामः समीहितसिद्धये ।

एतदादिसकलकार्यसिद्ध्यै धनसङ्ग्रहार्थे मधुरवाणीप्रणयिभिः प्रकाश्यमाना विज्ञप्तिरग्रिमाङ्के प्रकाश्येतेत्यलम् ।

---

# प्रार्थना

कार्तिकशुक्लप्रदि एकादशवत्सरीयः प्रथमोंकः प्रकाश्यते। ततो नियतसमये प्रतिमाससमंकाः प्रकाशयेरन्। सर्वे संस्कृतप्रणयिनो वार्षिकं मूल्यं रूप्यचतुष्टयं त्वरया प्रेष्य प्रोत्साहयन्तु। द्वित्रानपि नूतनान् ग्राहकान् सम्पादयन्तु। नितिधिवृद्धये यथाशक्ति १०-२५-५०-१०० रू प्रेष्य श्रीसुरसरस्वत्या अनुग्रहभाजो भवन्तु इत्यभ्यर्थना सम्पादकः।